* श्रीराधासर्वेश्वरो जयति *

॥ श्रीनिम्बार्कमहामुनीन्द्राय नमः ॥



श्री १९०८ श्रीमद्भगवन्निम्बार्काचार्यचरणपदकमला-

श्रिताश्रित-

विद्वद्वरश्रीमदनन्तरामदेवाचार्यविरचिता-

# वेदान्त-रत्नमाला



तर्करत्न-तर्कतीर्थ-वेदान्तवागीश-द्वैताद्वैतमार्तण्ड-

पं० श्रीअमोलकरामशास्त्रिनिर्मितया

## चन्द्रिकाख्यटीकया समलंकृता

सा च

अखिलभारतवर्षीयश्रीनिम्बार्क महासभायाः

सभासदां द्रव्येण मुद्रापयित्वा

प्राकाश्यं नीता

निम्बार्काब्द ५०३४ ] [ विक्रमाब्द १९९६

* श्रीराधासर्वेश्वरो जयति *

पूज्यपाद श्री १०८ महामुनीन्द्रभगवन्निम्बार्काचार्य्य--
चरणकमलाभ्यां नमः ।

# वेदान्त-रत्नमाला

अनादिनिवृत्तिपथप्रवर्तकब्रह्मविद्योपदेशकलोकाचार्यश्रीसनन्द-
नादिप्रवर्तितश्री१०८महामुनीन्द्रभगवन्निम्बार्काचार्य्यचरणो-
पबृंहितवैदिकसत्सम्प्रदायानुगतनिखिलशास्त्रपारावारी-
णस्वाभाविकद्वैताद्वैतसिद्धान्तसमर्थनकुशलश्री१०८
मदनन्तरामेण विरचिता ।

सा च

भगवदवतार श्री१०८सनन्दनादिप्रवर्तितसत्सम्प्रदायानुगतनिखि-
लरसिकचक्रचूड़ामणिश्री१०८स्वामिहरिदासपदाश्रिता श्री-
१०८स्वामिनीशरणपादपद्मचञ्चरीकेण कुरुक्षेत्रान्तर्गतपुण्ड-
रीकग्रामलब्धजनिनाश्रीवृन्दावनवास्तव्येन गौड़वंशावतं-
सश्रीशालिग्रामोपाध्यायात्मजेन तर्कादिशास्त्रविदुषा-
तर्कतीर्थतर्करत्नतर्कवागीशाद्युपाधिभूषितामोलक-
रामशास्त्रिणा निर्मितया चन्द्रिकाख्यटी-
कया समलंकृता ।

सा च

श्रीनिम्बार्काब्दाः
५०३४
वि० १९९६

अखिलभारतवर्षीय श्रीनिम्बार्क महासभा-
सभासद् महानुभावैर्मुद्रापयित्वा
प्राकाश्यं नीता ।

प्रति १०००

# भूमिका ।

अनादिनिवृत्तिपथप्रवर्तकाः ब्रह्मविद्योपदेष्टारश्च स्वाभाविकद्वैताद्वैतसिद्धान्तसमर्थननिपुणाः श्रीसनन्दनादयश्चत्वारः कुमारा विजयन्तेतराम् । तेषां श्री १०८मद्धंसरूपेणावतीर्णस्याचिन्त्यानन्तस्वाभाविकशक्तिनिखिलकल्याणगुणाकरस्य भगवतः पुरुषोत्तमश्रीकृष्णस्य शिष्यत्वं श्रीमद्भागवतोक्तवचसा निश्चीयते। तथाहि-एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः । सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा । पाञ्चरात्रसिद्धान्तप्रवर्तकस्याचार्य्यपादस्य श्री १०८ देवर्षिनारदस्य भगवदवतारश्रीसनत्कुमारशिष्यत्वं श्रीसनत्कुमारसंहितावचनैर्निर्धारयामस्तद्यथा श्रीसनत्कुमारं योगीन्द्रं सिद्धाश्रमनिवासिनम् । नियमेनोपसङ्गम्य शिरसा प्रणिपत्य च । नारदः परिपप्रच्छ ब्रह्मर्षिः सर्वकालवित् । इत्यादिना प्रार्थनापूर्वकसमुपसन्नेन श्रीनारदेन पृष्टः श्री १०८ भगवान् सनत्कुमार आह । साधुपृष्टं त्वया ब्रह्मन्नित्याद्युक्त्या 'अष्टादशाक्षरं मन्त्रं शृणु वक्ष्यामि नारद । समाहितमना भूत्वा दुर्लभं भुवनत्रये' इत्याद्युक्तिपूर्वकं तस्मै श्रीनारदायाष्टादशाक्षरं मन्त्रमुपदिष्टवानिति । नारायणमुखाम्भोजान्मन्त्रस्त्वष्टादशाक्षरः । आविर्भूतः कुमारैस्तं गृहीत्वा नारदाय वै । उपदिष्टःस्वशिष्याय निम्बार्काय च तेन तु । एवं परम्पराप्राप्तो मन्त्रस्त्वष्टादशाक्षर इति रुद्रयामलतन्त्रवचनाभ्यां प्राङ्निर्दिष्टानामाचार्याणां गुरुशिष्यभावः प्रसिद्धः । श्रीबादरायणोपदिष्टसूत्राणां निरवधिकरुणावरुणालयो जगदेवदुःखपङ्के निमग्नमुद्दिधीर्षुरवनितलावतीर्णो भगवान्सुदर्शनावतारः श्रीदेवर्षिनारादानुग्रहभाजनो भगवान् श्री१०८-निम्बार्काचार्य्यो व्याख्यानं वाक्यार्थरूपेण संग्रहीतवान्। श्रीभगवत्करस्थशङ्खावतारैः पूज्यपादश्रीश्रीनिवासाचार्यचरणैस्तस्य तात्पर्यजिघृक्षया वेदान्तकौस्तुभाख्यो ग्रन्थः प्राणायि । तदनन्तरं कैश्चिदाचार्य्यचरणैः श्रुतीनां सूत्राणाञ्चार्थो ऽन्यथात्वं नीतः । तदसहिष्णूनां वाद्युक्तिनिरसनशक्तिकानामस्मदीयपूर्वाचार्य्याणां निर्मिता निबन्धास्सन्ति । अतिप्रौढयुक्तिकेषु तेषु निबन्धेषु, इदानींतनानां जनानां प्रतिभामान्द्येन प्रवेशोदुर-

धिगम इत्याकलय्यानादिनिवृत्तिपथप्रवर्तकब्रह्मविद्योपदेशकलोकाचार्य्य-श्री १०८ सनन्दनादिप्रवर्तितश्री१०८महामुनीन्द्रभगवन्निम्बार्काचार्य्यचरणोपबृंहितवैदिकसत्सम्प्रदायानुगतेन निखिलशास्त्रपारावारीणेन स्वाभाविकद्वैताद्वैतसिद्धान्तसमर्थनकुशलेन श्रीमदनन्तरामेण सकलत्रय्यन्तार्थजिघृक्षिषया बालानामनायासेन बोधाय वेदान्ततत्त्वरत्नमालाख्य निबन्धो ऽयरचि । अस्मिन् निबन्धे सुप्रौढपाण्डित्येनातिबिसृत्वरस्वकीर्तिधवलीकृतसर्वदिङ्मण्डलेन सर्वतन्त्रस्वतन्त्रेण व्याकरणादितर्कोभयमीमांसादिशास्त्रपारावारीणेन श्रीमाधवमुकुन्देन तथोपदर्शितविशेषणविशिष्टेन जगद्विजयिश्रीकेशवकाश्मीरिभट्टपादेन च परपक्षगिरिवज्राख्ये बादरायणसूत्रवृत्तिवेदान्तकौस्तुभप्रभायाञ्च निर्दिष्टा विषयाएवोपनिबद्धास्सन्ति,ते च दुर्बोधविषया अस्य ग्रन्थस्याध्येतॄणांसामञ्जस्येन बुद्ध्यारुढाभवेयुः । अतःप्रेक्षावतां वेदान्तार्थाधिजिगांसूनां विदुषामयं निबन्धो द्रष्टव्यः । ग्रन्थस्यास्यरचयिता कदेमं भुवोभागमलंचकारेति वयं नजानीमः। किन्तु परमविरक्तशिरोमणिसकलशास्त्रपारावारीणहरिभक्तिपरायणपूज्यपादस्वभूरामदेवाचार्य्यशिष्यपरम्परानुगतश्चायंसहारणपुरजिलान्तर्गतजगाधरीपत्तनाख्येऽस्य निवासस्थानञ्चेति तु प्रायोजनानां प्रवादश्श्रूयते । चद्रिकाख्यटीकासम्वलिताया मुद्रिताया वेदान्तरत्नमालायाअध्ययनाध्यापनेनस्वीयसम्प्रदायसिद्धान्तस्य विपुलःप्रचारो भविष्यति। किञ्च साम्प्रतमेतत्स्वसम्प्रदायिनोवैष्णवा विद्वांसश्च स्वसिद्धान्तजिज्ञासाहितौत्सुक्याःसमुपलक्ष्यन्ते तेऽप्येतद्ग्रन्थमवलोक्य स्वसम्प्रदायसिद्धान्तं विज्ञाय त्रय्यन्तस्य याथात्म्यतत्त्वज्ञानेन सन्तुष्टाः सन्तः स्वीयसम्प्रदायोन्नतावनिष्टनिवृत्तिपूर्वकेष्टप्राप्तये निवद्धकक्षा भविष्यन्तीत्याशास्यते ।

अखिल भारतवर्षीय श्रीनिम्बार्क महासभायाः

स० सभापतिः—

**पं० श्रीअमोलकराम शास्त्री ।**

# वेदान्तरत्नमालाविषयसूचीपत्रम् ।



॥ श्रीमन्निकुञ्जविहारिणे नमः ॥

॥ श्रीभगवन्निम्बार्कमहामुनीन्द्राय नमः ॥

श्रीभगवन्निम्बार्काचार्यचरणोपबृंहितस्वाभाविक—
द्वैताद्वैतसमर्थनकुशलसर्वतन्त्रस्वतन्त्र
महामहोपाध्यायविद्वद्वर

श्रीमदनन्तरामदेवविरचिता—

# वेदान्तरत्नमाला



श्रीमदमोलकरामशास्त्रिनिर्मितया—
चन्द्रिका—टीकया
समलंकृता—



ब्रह्मादिसेव्यचरणं जगताश्च हेतुं,
स्तुत्यं मुनीशविबुधैः स्वजनार्तिहारम् ॥
कल्याणरूपगुणमीशमहं भजामि,
कृष्णं श्रिया हि वृषभानुजयाऽपि जुष्टम् ॥ १ ॥

निम्बादित्यस्य पादाब्जं लोचनानन्ददायकम् ।
सकलार्थप्रदं नृणां प्रणमामि पुनः पुनः ॥ १ ॥
श्रीनिम्बार्कमताम्भोधिसन्तारे भाष्यनौकरः ।
श्रीश्रीनिवासवर्य्यस्तच्चरणौ शरणं वृणे ॥ २ ॥

सनाढ्यान्वयसम्भूतं हरिदासं महोज्ज्वलम् ।
गङ्गाधरसुतं नौमि नैष्ठिकव्रतधारिणम् ॥ ३ ॥
ज्ञानवैराग्यभावादि-प्रधानगुणसागरम् ।
आशुधीरस्य शिष्यं श्रीहरिदासं नतोऽस्म्यहम् ॥ ४ ॥
स्वामिनीशरणं नत्वा भावुकं परमं गुरुम् ।
वेदान्तरत्नमालायाष्टीकां करोमि चन्द्रिकाम् ॥ ५ ॥

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपूर्वकसमाप्त्यर्थं शिष्टाचारसिद्ध मुपास्यरूपस्वेष्टस्मरणरूपं मङ्गलमाचरति—ब्रह्मादीति । ब्रह्मादिभिः चतुर्मुखरुद्रेन्द्रादिभिः सेव्यौ चरणौ यस्य स तम् । एतेन भगवतः पुरुषोत्तमस्य श्रीकृष्णस्यैव परतमत्वं प्रतिपाद्यते । तदुक्तं भगवत्पादै-राद्याचार्यैः वेदान्तकामधेनौ । ( ब्रह्मशिवादिवन्दितादिति ) जगतां स्थावरजङ्गमात्मकानां हेतुरभिन्ननिमित्तोपादानकारणमिति तदर्थः । मुनिश्च ईशश्च विबुधश्च तैः स्तुत्यं श्रीनारदभवदेवतागणकर्तृकस्तुतिक-र्मीभूतमित्यर्थः । "यं सर्वे देवा नमस्यन्ति मुमुक्षवो ब्रह्मवादिनश्च तमेकं गोविन्दंसच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामीति" तिश्रुतेः ।

स्वस्य जनानां भक्तानां दुःखहरणशीलम् । कल्याणरूपा गुणा यस्मिन् एवम्भूत ईशः जगन्नियन्ता वासुदेवस्तमित्यर्थः । तदुक्तं भगवत्पादैराद्याचार्यैः। "अशेषकल्याणगुणैकराशिमिति। अस्य व्याख्यानं वेदान्तरत्नमञ्जूषायां द्रष्टव्यम् । भगवतः श्रीकृष्णस्य श्रियः रुक्मिण्याः गोपीप्रधानभूतायाः श्रीवृषभानुजायाः नित्ययोगमाह—श्रिया इति । विशेष्यं निर्दिशति-कृष्णमिति । श्रिया रुक्मिण्या गोपीप्रधानभूतया प्रेमाधिष्ठातृश्रीवृषभानुजया राधया जुष्टं सेवितं श्रीकृष्णमहं भजामि सेवे "भज इत्येष वै धातुः सेवायां परिकीर्तितः" इति पुराण-वचनमनुसन्धेयम् । तथाचोक्तं श्रीपराशरेण ( देवत्वे देवदेहेयं

मानुषत्वे च मानुषी। विष्णोर्देहानुरूपा वै करोत्येषाऽऽत्मनस्तनुमिति ) ( राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि। अन्येषु चावतारेषु विष्णोरेषाऽनपायिनीति ) ( राधया माधवो देवो माधवेन तु राधिका विराजते ) इत्यादिऋक्परिशिष्टश्रुतावुक्तम्। ॥ १ ॥

कृष्णायुधं प्रियतमं तदचिन्त्यशक्तिं
स्वाम्याज्ञयाऽवतरितं धरणीतलेऽस्मिन।
आनन्दसञ्ज्ञकमुनिं नियमोक्तिपूर्वं
स्वाचार्य्यमाद्यमहमाश्रय ईशचक्रम् ॥२॥

टीका—श्रीकृष्णस्यायुधमस्त्रविशेषं प्रियतमम्। अतिशयेन प्रियं तदचिन्त्यशक्ति तस्य भगवतः श्रीवासुदेवस्य अचिन्त्याः चिन्तयितुमनर्हाः शक्तयो यस्मिन् स तम् अस्मिन् धरणीतले स्वामिनः श्रीकृष्णस्याज्ञयाऽवतरितम्, अवतीर्णं नियमोक्तिपूर्वं, नियमस्योक्तिः पूर्वा यस्मिन् तम् आनन्दसंज्ञकम् आनन्द इति संज्ञा यस्य स तथोक्तः स चासौ मुनिश्च तम् नियमानन्दमुनिमित्यर्थः। ईशस्य भगवतः वासुदेवस्य चक्रं सुदर्शनं सुदर्शनचक्रावतारं स्वस्याचार्यम् आद्याचार्य्यं भगवन्तं श्रीनिम्बार्कमहमाश्रये शरणं व्रजामि। श्रेयोर्थिभिराचार्य्यचरणावेवोपायत्वेनोपेयत्वेन वरणीयावित्यर्थः।

पाञ्चजन्यावतारञ्च कृष्णाज्ञापरिपालकम्।
श्रीश्रीनिवासमाचार्य्यं भाष्यकारं नमाम्यहम्। ३ ॥
वेदान्तरत्नमालाख्यो ग्रन्थस्तेषामनुग्रहात्।
तदुक्तेनैव मार्गेण क्रियते शास्त्रमानतः। ४ ॥
प्रत्यक्चेतनतत्त्वंचाचेतनाख्यं ततः परम्।
परब्रह्मादिसंज्ञञ्च भण्यतेऽस्मिन् समासतः ॥ ५ ॥

साधनानि फलञ्चादि तद्विरोधिनिरूपणम् ।
तत्रादौ चेतना ज्ञेया वैष्णवैः साम्प्रदायिकैः ॥ ६ ॥

अचिन्त्यानन्तस्वाभाविकहेयप्रत्यनीककल्याणगुणशक्त्याश्रयभगवच्छ्रीपुरुषोत्तमकरस्थशङ्खावतारं बादरायणप्रणीतसूत्राणां भाष्यकारं पूज्यपादश्री१०८भगवन्निम्बार्काचार्य्यप्रधानशिष्यं श्रीश्रीनिवासाचार्य्यं प्रणमति—पाञ्चेति । ३ । पूर्वाचार्य्योपदिष्टपथा अस्मदीयपूर्वाचार्य्यानुग्रहात् श्रुतिस्मृतिप्रमाणतः मयाऽनन्तरामेण वेदान्तरत्नमालाख्यः ग्रन्थः क्रियतइत्यर्थः । ४ । चिदचिदीश्वरतत्त्वज्ञानपूर्वकभगवदनुग्रहस्य भगवद्भावापत्तिरूपमोक्षहेतुतया तादृशतत्त्वज्ञानार्थं एतन्निबन्धप्रतिपाद्यं प्रमेयं निरूप्यते—प्रत्यगिति । चेतनाचेतनेश्वरभेदात्पदार्थस्य त्रैविध्यंविभज्य संक्षेपतः अस्मिन् निबन्धे तेषां तत्त्वज्ञानमीरितम्—प्रत्यक्त्वं स्वस्मै स्वेनावभासमानत्वम् स्वसामानाधिकरण्य,स्त्रप्रयोजकत्वोभयसम्बन्धेन संशयाभावविशिष्टस्वनिरूपितविषयतात्वं प्रत्यक्त्वमितिनिष्कर्षः । प्रथमस्वपदद्वयं संशयाभावपरम् । चरमस्वपदञ्च यत्र प्रत्यकृत्वं स्थाप्यं तत्परम् ।५।साधनानि = कर्मज्ञानभक्तिप्रपत्तिगुर्वज्ञानुवृत्तियोगभेदाद्विविधानि । फलम् = मोक्षलक्षणं सर्वकर्मध्वंसाभावपूर्वकनिःशेषाविद्यानिवृत्त्यात्मकपरिपूर्णयावदात्मभाविब्रह्मस्वरूपादिविषयकानुभूतिसन्ततिरिति तदेव भगवद्भावापत्तिसायुज्यसाम्यादिशब्दैरभिधीयते । तद्विरोधीति । तस्य भगवतःप्राप्तेविरोधिनोनिरूपणमित्यर्थः । भगवत्प्राप्तिप्रतिबन्धकोदेहेन्द्रियमनोबुद्धिष्वनात्मस्वात्माध्यवसायः । एतेषां तत्त्वमुपरिष्टाद्व्यक्तीभविष्यनि, तत्र तावच्चेतनस्वरूपनिरूपणं प्रतिजानीते, तत्रेति । तेषां मध्य इति तदर्थः चेतनाः प्रत्यगात्मानः ॥ ६ ॥ त्रिभिःश्लोकैःप्रत्यगात्मनां लक्षणं निर्वक्ति—

देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणाः ।
ज्ञानस्वरूपा ज्ञातृत्वकर्तृत्वाद्यात्मधर्मकाः ७ ।

जीवात्मनां तत्त्वं तावन्निरूप्यते देहेति । तत्र चार्वाकमते

पृथिव्यप्तेजोवायव इति चत्वारः पदार्थास्सन्ति, चतुर्णां तेषां कायाकारपरिणामे परिणामविशेषस्वाभाव्यात्तत्र चैतन्यमुत्पद्यते तन्मते चैतन्यविशिष्टो देह एव जीवात्मा,कर्त्ता भोक्ता च स एव देहनाशे तन्नाशः तथाच स्थूलोऽहं कृशोऽहमित्यादिसामानाधिकरण्यमुपपन्नं भवति प्रत्यक्षमेव तन्मतेऽर्थसाधकम् प्रमाणम्, प्रजानां नियन्तृत्वेन प्रसिद्धो-राजा ईश्वरो नतु तदन्यो जगदुत्पत्तिस्थितिसंहारकर्त्ता ईश्वरः, देह विनाशो मोक्षः, इति पूर्वपक्षे सिद्धान्तः। प्रत्येकं भूतानां चेतनत्वं तत्समूहस्य वा ? नाद्यः। अहमिच्छामि पश्यामि जिघ्रामि रसयामि स्पृशामि शृणोमीत्येकात्मगोचरानुभवस्याप्रामाण्यापत्तेः। नहीच्छतः, पश्यतो, जिघ्रतो, रसयतः, स्पृशतः, शृण्वतश्चैक्यं प्रत्येकचैतन्यपक्षे युज्यते। नापि द्वितीयः। एकस्मिन् भूते नष्टे तत्समुदायोऽपि नष्ट इति जीवत एव प्रेतत्वापत्तेः। किञ्च प्रत्येकमसतश्चैतन्यस्य तत्समुदाये तत्सत्वायोगान्न शरीरस्यात्मत्वमभ्युपगन्तुं शक्यते ? मृतशरीरे व्यभि-चाराच्च। नच चैतन्यविशिष्टं शरीरमात्मा मृतशरीरे चैतन्यवैशिष्ट्य-विरहान्न तथात्वम्। तथाचान्वयव्यतिरेकाभ्यां जीवतः शरीरस्यैव ज्ञान-हेतुत्वं सिध्यति। सिद्धे च तस्मिन् समवायिकारणं तदेव कल्प्यते तद्व्यतिरिक्तचेतनकल्पने मानाभावात्— "गौरोऽहं जानामीं" त्यनुभ-वाच्चेतिवाच्यम्। शरीरस्यानुभवितृत्वे कर्तृत्वे च तन्नाशादन्यस्य भोक्तृत्वे प्रतिसंधातृत्वे चातिप्रसङ्गात्। नापि कर्मज्ञानाभ्यां जनिताव-दृष्टसंस्कारौ सर्वत्र प्रतिभूतनियतौ अनुवर्तिष्येते यतो भोगप्रति सन्धाननियमो यस्मिन् सन्ताने कर्म तत्काय सन्ताने भोगो यत्कायसन्ताने ऽनुभवस्तत्कायसन्ताने स्मृतिरित्यपि वक्तुं शक्यते। बाल्यशरीरेणा-नुभूतस्य युवशरीरेण स्मरणानुपपत्तेः। अन्यानुभूतस्यान्येन स्मरणेऽति प्रसङ्गात्। नच बाल्ययौवनयोरेकं शरीरं भवितुमर्हति शरीराणां विनश्वरस्वभावात्, जाठराग्निना पच्यमानानां भुक्तपीताहारावय-वानां प्रतिक्षणमुपचयापचयवैषम्यादवयवि शरीरमपि प्रतिक्षण

मुपचयापचयवदन्यदन्यद्भवति । नापि मृगमदवासनेव वस्त्रादिषु संसर्गादन्यवासनान्यत्र सङ्क्रामति। मात्रानुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसङ्गात्। किञ्च यदि शरीरस्यात्मत्वमभ्युपेयते तदा ममेदं शरीरं मम हस्तादीतिव्यतिरेकावगाहिप्रत्ययो न स्यात् तथाचावयवेषु बहुष्व-भिमन्तव्येष्वेवाबाधतैकप्रत्ययविषयोभिमन्ता हस्तादिभ्यस्तत्सङ्घाता-च्चान्यः प्रत्यगात्मा, अवयवोपचयापचयविनाशादिकालेष्वपि सएवा-हमिति प्रत्यभिज्ञाविषयः कालभेदेऽप्यभिन्नः । जातमात्रोहि बालः स्तन्यादिपानेच्छाविशिष्टः स्तन्यपाने प्रवर्त्तते। सा च प्रवृत्तिः जन्मा-न्तरीयसंस्कारोद्बोधमन्तरेण नोपपद्येत । ततश्चदेहादिभ्यो व्यतिरिक्त-आत्मेति सिद्धम्। सन्ति देहातिरिक्तात्मसद्भावे देहान्तरानुभाव्यस्वर्ग-स्वाराज्यसाधनविधायिन्यो यमनरकादिप्रापिकाः श्रुतयस्ताभिर्देहान्त-रानुयायी भोक्ता प्रत्यगात्मा प्रतिपाद्यते। तस्माद्वाएतस्मादन्नमयादन्यो-ऽन्तरात्मा विज्ञानमयः, इति श्रुतेः। "देही नित्यमवध्योऽयम्" वासांसि जीर्णानि यथा विहाय त्यदि श्रीभगवदुक्तेश्च ! अन्येत्विन्द्रियाण्येवात्मेति व्यपदिशन्ति। तथाहि चक्षुरादीनां सत्त्वे रूपादिज्ञानसत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां निश्चीयते। रूपादि ज्ञानं चक्षुरादिनिष्ठं चक्षुः पश्यतीति प्रतीतेः। जायते चेन्द्रियेषु विकलेषु विकलोऽहमिति-ज्ञानं परस्परानुभूतार्थप्रतिसन्धानमपि संस्कारवैचित्र्यात् । तच्चैकशरीरानुप्रवेशायत्तमिति तदपि न साम्प्रतम्,इन्द्रियाणां करणत्वेन कर्तृत्वासम्भवात् । रूपादिज्ञानस्य चक्षुराद्यन्वयव्यतिरेकानुविधानं तत्करणत्वेनाप्युपपत्तेः। चक्षुषा पश्यामि श्रोत्रेण शृणोमीति प्रतीतेः। इन्द्रियाणां प्रतिनियता विषयास्तेषां प्रतिसन्धाता त्वेकः, योऽहं द्रष्टा स एव शृणोमी त्यनुभवात्। इन्द्रियाणां कर्तृत्वपक्षे चक्षुरादीनां वैकल्ये स्मरणं न स्यादनुभवितुरभावात्, अन्यानुभूतस्यान्येन स्मरणासम्भ-वात्। इन्द्रियेषु विकलेषु विकलोऽहमिति धीर्जायते साऽपि चक्षुषा विकलोऽहमित्यादि रूपा नतु चक्षुरहं नास्मीति विरोधात्। इन्द्रियादि-

भ्योऽतिरिक्तआत्मा सिध्यति, अस्तु तावद्देहेन्द्रियेभ्योऽरिक्त आत्मा स तु मन एव स्यात्, देहादेरन्यत्वात् प्रतिसन्धानोपपत्तेः असङ्घात रूपत्वेन प्रत्येकादिविकल्पानवकाशाच्च, तद्व्यतिरिक्तात्मकल्पने गौरवादिति। तदपि न। सुषुप्तौ मनसो लयात् स्मृत्यादिकार्ये मनसः करणत्वात्। प्राणाधीना देहेन्द्रियमनसां प्रवृत्तिरतः प्राणएवात्मेति मन्यन्ते। प्राणे आत्मशब्दप्रयोगात्। तन्न। यतः ज्ञानाधीना वस्तुव्यवस्था ज्ञानञ्च ज्ञातृधर्मतयैव विद्यते, सुषुप्त्यादौ प्राणस्य सत्वेऽपि पाटच्चरैर्भूषणादिहरणदर्शनात्प्राणस्याचैतन्यनिश्चयः, वायुत्वाच्च प्राणो न चेतनः वायुत्वात् व्यजनजन्यवायुवदित्यनुमानात् एवम्बुद्धेरप्यनात्मत्वमनुमेयम् अन्तःकरणत्वाविशेषात् एतत्सर्वं मनसि निधायाभिहितं "देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणा" इति द्वन्द्वसमासः। आदिशब्दो ऽहचित्तप्रकृत्यादिजडवर्गसंग्रहार्थः। एतस्मात्प्राणमयादन्योऽन्तरात्माविज्ञानमयः, इत्यादिश्रुतेः। न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वान भूयः। "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इति श्रीभगवदुक्तेश्च। देहादिभ्योऽतिरिक्तं ज्ञानेच्छा प्रयत्नादिगुणवन्तं विभुं प्रतिदेहभिन्नं द्रव्यात्मकमात्मानं मन्यन्ते तार्किकास्तदुक्तं कुसुमाञ्जलौ प्रथमस्तवके "कर्तृधर्मा नियन्तारश्चेतिता च स एव नः। अन्यथा ऽनपवर्गः स्यादसंसारोरथवा ध्रुवः इति तन्मतव्यावर्तनाय विशेषमाह ज्ञानस्वरूपा इति। ज्ञानं चेतनं स्वरूपं येषान्ते तथा "यथा सैन्धवघनोऽनन्तरो ऽबाह्यः कृत्स्नः रसघनः, एवंवै अरे ऽयआत्माह्यः नन्तरोऽवाह्यः कृत्स्नः प्रज्ञानघनः एव बृ० ४।५।१३। "अत्रायं पुरुषः स्वयंज्योतिर्भवति" बृ० ४।३।६। इतिश्रुतिभ्यः। यथा सैन्धवघनो लवणखण्डोऽनन्तरोऽन्तरावयवव्यतिरिक्तोऽवाह्य वाह्यावयवव्यतिरिक्तश्च सर्वोपि रसघनो भवति। अथान्तरो वाह्यश्च रसघनइत्युक्ते मध्यावयवानां रसनत्वं घस्यात्, अतस्तत्संग्र हायानन्तरोऽवाह्य इति व्यतिरेकेणोक्तम्। किञ्चात्मनो निरवयवत्वात्तद्दृष्टान्तभूतस्य सैन्धवघनस्य तत्साधारण्य-

सम्पादनायेत्थमुक्तिः। एवमयमात्मा प्रज्ञानघन इतिश्रुत्यर्थः अत्रात्मनो ज्ञानस्वरूपत्वमुक्तम्। अत्रायमिति। अत्रास्यां स्वप्नावस्थायामयमात्मा स्वयंज्योतिर्भवति ज्ञानस्वरूपत्वात्। स्वप्रकाशो भवति। स्वाप्नहस्त्यादि-पदार्थभानन्तु धर्मभूतज्ञानेनैवेत्यन्यदित्यर्थः। नन्वेवं मायावादिसिद्धान्तेऽतिप्रसङ्गस्तैरपि देहेन्द्रियादिजडवर्गात्यन्तभिन्नज्ञानस्वरूपत्वमात्मनः स्वीकारादित्याशङ्क्य विशेषान्तरमाह—ज्ञातृत्वेति। ज्ञातृत्वकर्तृत्वादि-धर्मा येषु ते ज्ञातृत्वकर्तृत्वादिधर्मकाः। अथ योऽयं वेदेदं जिघ्राणीति स आत्मा छा० ८।१२।४ अत्रात्मनोऽवघ्रातृत्वोक्त्या ज्ञातृत्वं सिद्धयति, अवघ्राणस्य ज्ञानविशेषत्वात्। तेन ज्ञानगुणकत्वं सिद्धयतीत्यर्थः। कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः। बृ० ४।३।७। एतद्वाक्येनात्मनो ज्ञानगुणकत्वं स्वयंप्रकाशत्वञ्चोक्तं भवति। विज्ञानमय इति प्राचुर्य्यार्थे मयट्, तेनात्मनो ज्ञानव्यतिरेक उक्त इति तस्य ज्ञानगुणकत्वं सिद्धयति प्राणेषु, इन्द्रियेषु मध्ये आत्मनो ज्योतीरूपत्वोक्त्या स्वप्रकाशत्वं सिद्धयति। आत्मा स्वयं ज्ञानरूपोऽपि गुणभूतज्ञान-द्वारेन्द्रियसाधनैश्च बद्धावस्थायां विषयावभासको भवति, प्रभाद्वारासूर्य्य इवेत्यर्थः। एष हि द्रष्टा स्प्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। प्र० ४।९। अत्र द्रष्टास्प्रष्टेत्यादिनिर्देशादात्मनो ज्ञान गुणकत्वं सिद्धयति विज्ञानात्मेत्यनेन विज्ञानस्वरूपत्वञ्च सिद्धयति। एतेनात्मनो ज्ञातृत्वमेव, न ज्ञानस्वरूपत्वमितिवदन्तस्तार्किकास्तथाऽऽत्मनो ज्ञानस्वरूपत्वमेव न ज्ञातृत्वमिति वदन्तो मायावादिनश्च निरस्ता भवन्ति। विज्ञातारमरे केन कं विजानीयात्। बृ०। २। ४। १४। अत्रच ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वं दर्शितम्। अनेन ज्ञातृत्वं स्वाभाविकमितिफलितम्। जानात्येवायं पुरुषः। एतेन बद्धावस्थायामेव ज्ञातृत्वं न मुक्ताविति वदन्तो निरस्ताः। अवधारणासङ्कोचान्मुक्तावपि ज्ञातृत्वं सिद्धम्। नहि द्रष्टर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वान्नहि-मन्तुर्मतेर्नहि विज्ञातुर्विज्ञाते 'अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मा'

वृ० ।४।६।३०। इत्यादिश्रुतिभ्यः । द्रष्टुर्दर्शनाश्रयस्यात्मनो दृष्टिः गुणभूतदर्शनं तस्य विनाशो नास्ति नित्यत्वात् । विज्ञातुरिति । विज्ञातुर्विज्ञानाश्रयस्यात्मनो या विज्ञातिः गुणभूतविज्ञानं तस्या विनाशो नास्ति-नित्यत्वादित्यर्थः । एतेन धर्मधर्मिभावो दर्शितः । ज्ञोऽत एव ब्र० सू० २।३।१९। स्वयंप्रकाशोऽयमात्मा ज्ञानाश्रयः न ज्ञानमात्रस्वरूप इत्यर्थः । एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः, इतिश्रीमुखोक्तेश्च । उदाहृतश्रुतिसूत्रस्मृतिवचनेभ्यः प्रत्यगात्मनो ज्ञातृत्वं सिद्धम् । ननु ज्ञानस्वरूपस्यात्मनो कथं ज्ञानगुणकत्वं नहि स्वरूपमेव स्वस्य गुणोभवतीति चेन्न यतोऽप्रत्यक्षस्यात्मनो यथा ज्ञानस्वरूपत्वं श्रुतिप्रमाणेनाभ्युपेयते तथा तेनैव प्रमाणेन तस्य ज्ञानगुणकत्वमप्यभ्युपेयं स्वरूपस्य गुणत्वं कथमिति नाशङ्कनीयम् । स्वरूपभूतज्ञानात्पार्थक्येन गुणभूतज्ञानस्य स्वीकारात् । यथा मणिर्हीरकादिः द्युमणिः सूर्यः स च स्वयं तेजस्स्वरूपोऽपि तेजोरूपायाः प्रभाया आश्रयो भवति तस्य प्रभाविशिष्टरूपेणावस्थितत्वात् । ननु प्रभाया द्रव्यत्वमेव नास्ति, कुतस्तद्व्याप्यं तेजस्त्वमिति चेन्न । प्रभायाश्शुक्लरूपाश्रयतया द्रव्यत्वाभ्युपगमात् गुणेषु गुणानङ्गीकारात् । प्रभाया गुणत्वव्यवहारस्तु तस्याः सूर्यादितेजोऽन्तरावलम्बितत्वेन गुणसादृश्याद्गौणः । एवं प्रभाया द्रव्यत्वे सिद्धे तस्यास्तेजस्त्वं प्रत्यक्षसिद्धमेव । तथा च यथा सूर्यतत्प्रभयोस्तेजस्त्वाविशेषेऽपि सूर्यत्वप्रभात्वावच्छिन्नतयाऽऽधाराधेयभावः प्रत्यक्षादिप्रमाणसिद्धस्तथा प्रकृतेऽप्युभयोर्ज्ञानत्वसाम्येऽपि धर्मत्वधर्मित्वावच्छिन्नतयाऽऽधाराधेयभाव उपपद्यत इतिसिद्धं ज्ञातृत्वं प्रत्यगात्मनाम् । अयञ्चात्मा कर्ता भोक्तृत्वात् । चेतनोऽहं करोमीति प्रतीत्या, आत्मनि कृत्याश्रयत्वरूपकर्तृत्वस्य प्रत्यक्षसिद्धत्वात । आदिपदेन भोक्तृत्वादिकं ग्राह्यम् ॥ ७ ॥

अहमर्थस्वरूपाश्च सर्वावस्थासु निर्णयात् ।
हर्यधीनाश्च सर्वासु ह्यवस्थासु क्रियासु च ॥ ८ ॥

अहमर्थः स्वरूपः येषां प्रत्यगात्मनां तेऽहमर्थस्वरूपाः । अहं जानामीच्छामि करोम्यनुभवामीत्यादिप्रत्ययेभ्यः, अहमर्थस्वरूपत्वं प्रत्यगात्मनाम् । ननु सुषुप्त्यादावहमर्थस्य व्यभिचारान्नास्ति, अस्मदर्थस्यात्मत्वम् , आत्मनः सर्वावस्थानुगतत्वादतः प्रकृतिकार्यरूप एवायमहंजानामीत्यादिप्रतीतिविषयोऽहमर्थः " अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधे " ति भगवदुक्तेरितिचेन्न, उक्तहेतोः स्वरूपासिद्धत्वात्तथाहि सुषुप्त्यादावहमर्थस्यावगमो मानसिद्धः, एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषमेतावन्तं कालं मूर्छित एवासमित्यादिप्रत्यभिज्ञाया एव मानत्वात्तस्मात् सुषुप्त्यादावपि सुखाज्ञानविषयकज्ञानाश्रयाभिन्नोऽहमर्थोऽनुगत एव विशेषविषयाभावेन विशेषविषयकप्रत्यक्षस्यानुत्थानात् "ब्रह्मैवेदमग्रआसीत्" सचात्मानं वेदाऽहं ब्रह्मास्मीति वहु स्यां प्रजायेय नामरूपे व्याकरवाणीत्या"दिभिः श्रुतिभिः ब्रह्मणोऽप्यहमर्थत्वं निश्चीयते । "निरञ्जनःपरमं साम्यमुपैती" त्यादिना तत्साम्यापन्नानां मुक्तानामविज्ञात्रभिन्नाहमर्थ स्वरूपत्वम् मुक्तावप्यहमर्थस्याननुगतत्वंसिद्धं तद्धैपश्यन्नृषिर्वामदेवोऽप्यहं मनुरभवं सूर्य्यश्चेति मुक्तानामपि तथैवानुभवश्रवणाच्चेत्यभिप्रायेणोक्तं सर्वावस्थास्विति । सर्वासु अवस्थासु जाग्रदादिवन्धमोक्षादिषु । अहमर्थत्वमनुगतमित्यर्थः । हर्य्यधीनाश्चेति । सर्वासु अवस्थासु जाग्रदादिवन्धमोक्षादिषु क्रियासु, स्थितिप्रवृत्तिनिवृत्तिरूपक्रियासु प्रत्यगात्मनां श्रीहरिपुरुषोत्तमाधीनत्वम् । तदुक्तम् । आदिमश्लोकव्याख्यानावसरे (वेदान्तरत्नमञ्जूषायां) पूज्यपादश्रीपुरुषोत्तमाचार्यैः–"श्रीपुरुषोत्तमायत्तस्वरूपस्थितिप्रवृत्तिकत्वं सर्वनियन्तुर्विश्वात्मनः श्रीवासुदेवस्यायत्तं नियततन्त्रं स्वरूपं स्थितिश्च प्रवृत्तिश्च यस्य तत्त्वं सर्वदेशसर्वकालीनवस्तुविषयकज्ञानादौ क्रियाप्रवृत्त्यादौ च स्वातन्त्र्याभाववत्वमिति । "एष एव साधु-

कर्म कारयति"। सकारयेत् पुण्यमथापि पापं न तावता दोषवानीषिताऽपि तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति "अज्ञो जन्तुरनीशश्च आत्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं वाश्वभ्रमेव वा" इत्यादिश्रुतिभ्यः। बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः। सुखं दुःखं भवो भावोभयञ्चाभयमेव च। अहिंसा समता तुष्टिस्तपो दानं यशोऽयश भवन्ति भावा भूतानां मत्त एव पृथग्विधाः। इति श्रीमुखोक्तेश्च।

तथाऽणुपरिमाणाश्च भिन्नाः सर्वे स्वरूपतः।
प्रतिदेहं ह्य नन्ताश्च क्षेत्रज्ञाः परिकीर्तिताः ॥ ६ ॥

यदि प्रत्यगात्मनां मध्यमपरिमाणकत्त्वं स्यात्तदा घटादिवत्सावयवत्वेनानित्यत्वं स्यात्, तथा सति शारीराणां नित्यत्वप्रतिपादिकाश्श्रुतयो बाध्येरन्। यदि जीवानां विभुपरिमाणकत्वमिष्यते तदोत्क्रान्तिगत्यागतिभिश्चलनमेव न घटेत, तथात्वे उत्क्रान्त्यादिबोधकश्रुतयो व्याकुप्येरन्नित्यतोऽणुपरिमाणकत्वं प्रत्यगात्मनां निर्वक्ति-तथेति। अणुपरिमाणयेषांते अणुपरिमाणाः। "अणुर्ह्येष आत्मा चेतसा वेदितव्यः यस्मिन् प्राणः पञ्चधा संविवेशः। अणुर्ह्येष आत्मा यं वा एते सिनीत, इत्यादिश्रुतिभ्यः। सङ्ख्याविवादं निराकरोति भिन्नाइति।प्रतिदेहं स्वरूपतः स्वभावतः भिन्ना विलक्षणा इति यावत्। नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानिति श्रुतेः। अंशो नानाव्यपदेशादिति न्यायात्।"न त्वेवाहं जातु नासं नत्वं नेमे जानाधिपाःनचैवंन भविष्यामः सर्वे वयमतपरमित्यादि"स्मृतेश्च। एकैकस्य जीवस्योक्तसाधन सम्पत्या क्रमेण मोक्षाभ्युपगमे कदाचित् सर्वेषामेव मोक्षापत्तौ निःशेषकार्यकारणात्मकविश्वत्यन्ताभावप्रसङ्ग इत्यत आह—अनन्ताश्चेति। हि यस्माद् क्षेत्रज्ञाः जीवा अनन्ताः तस्मान्नोक्तदोषावकाशः। अनन्तत्वञ्चात्र सङ्ख्यानिरूपितावसानशून्यत्वम्। असङ्ख्याका इति यावत्। परिकीर्तिता इत्यनेन वेदान्तवाक्यैः महर्षिभिश्चेति योज्यम्।

तानि च वाक्यानि पूर्वमेवोदाहृतानि। देहेन्द्रियमनोबुद्धिप्राणादिविलक्षणो ज्ञानस्वरूपो ज्ञातृत्वकर्तृत्वधर्मकोऽहमर्थरूपः परमेस्वरायत्तस्वरूपस्थिति प्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरो भिन्नोऽनन्तबन्धमोक्षार्ह इति-प्रत्य-गात्मनां लक्षणं पर्य्यवसितम्। अद्य विशेषणेन देहेन्द्रियाद्यात्मवादिनां मतमपाकृतं भवति द्वितीयविशेषणेन तार्किकाणां मतनिराकरणम्। निर्विशेषचिन्मात्रं ब्रह्मैव जीवत्वेनाभ्युपगच्छतां मायावादिनां मतेऽतिप्रसक्तिनिरासाय ज्ञातृत्वादिधर्मकत्वेति विशेषणम्। अहमर्थस्वरूप-त्वमपि मायावादिनां मतनिरासाय। उक्तलक्षणस्य परब्रह्मणि सत्वात्तत्रातिप्रसङ्गवारणाय पञ्चमविशेषणम्। परमेश्वरायतस्वरूप-स्थितिप्रवृत्तिकत्वदलस्यासाधारणस्य व्यावर्त्तकत्वान्नोक्तदोषावकाशः तादृशविशेणस्य सत्वं यदि परब्रह्मणि कश्चिदनभिज्ञो ब्रूयात्तदाऽन्य-दसाधारणविशेषणं वदन् प्रत्यग्वृत्तिपरिमाणविवादं निराकरोति-अणुपरिमाणक इति। सङ्ख्याविवादनिरासाय प्रतिशरीरभिन्न इति। प्रत्यगात्मनां लक्षणं निरूप्य सम्प्रति देहेन्द्रियाद्यात्मवादिनां मतं-निराकरोति—

देहादीनामनात्मत्वं प्रसिद्धं लोकवेदयोः
जडत्वान्नश्वरत्वाच्च करणत्वात् क्षयादपि। १०॥

देहो नात्मा मृतशरीरे चैतन्यानुपलब्धेः भौतिकत्वात् जडत्वा-च्चेति प्रयोगात्। लोकानां ममेदं शरीरं मम हस्ताविति व्यति-रेकावगाहिप्रत्ययो जायते तस्मान्निश्चीयते शरीराच्चान्य आत्मा सन्ति च देहान्तरभोग्यस्वर्गसाधनभिधायिन्योयमनरकादिप्रापकश्रुतयश्च ताभि र्निश्चीयते देहान्तरयायी भोक्ताआत्मास्तीति। तस्माद्वाएतस्मादन्नमया-दन्योन्तरात्मा विज्ञानमयः"देहीनित्यमवध्योयम्। वासांसि जीर्णानि यथा विहाय' न जायते म्रियते ना कदाचिन्नायं भूत्वा भविता वान-भूयः। अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे

इत्यादिश्रुतिस्मृतिभ्योपि देहातिरिक्त आत्मा इति निश्चीयते, एतदभि-प्रेत्यैवोक्तं लोकवेदयोरिति । इत्यात्मनोदेहातिरेकःसिद्धः । चार्वाकैकदेशानुयायिनो वाह्यकरणान्येवात्मेति व्यपदिशन्ति तन्मतं दूषयति—(करणत्वात्) वाह्येन्द्रियगणो नात्मा, करणत्वात्, क्षयित्वाच्च,वास्या-दिवत्। चक्षुषा पश्यामि श्रोत्रेण शृणोमीति प्रत्ययो न तु चक्षुरह-मिति धीर्न हि नष्टमिन्द्रियं स्ववैकल्यमनुसन्धत्ते, असत्त्वात्। नाप्यन्यत्,अन्येनानुभूतस्यान्येनस्मरणायोगात्। निखिलानां विषयाणां-प्रतिसन्धातात्वेकः योहं द्रष्टा स एव शृणोमीति प्रतीतेः। एके मनस एवात्मत्वं भावयन्ति, तदप्यकिञ्चित्करम्, सुषुप्तौ तस्यापि लयादन्तः-करणत्वाच्च चक्षुरादिवदिति। बुद्धिरपि नात्मा अन्तःकरणत्वात्। प्राणोपि न चेतनः, वायुत्वात् व्यजनजन्यवायुवदिति, प्रयोगात् इत्यात्मन इन्द्रियवुद्धिप्राणातिरेकः सिद्धः। १० ॥

आत्मा स्वतएव प्रकाशते नतु परप्रकाश्यत्वं तस्य,यतस्तस्य श्रुतिषु स्वयंज्योतिष्ट्वस्वरूपत्वाभिधानादित्याह—

**तेषां ज्ञानस्वरूपत्वं नेन्द्रियायत्तमस्ति वै ।**
**तेषां प्रकाशकत्वाच्च स्वयंज्योतिष्ट्वमुच्यते । ११ ॥**

तेषां प्रत्यगात्मनां ज्ञानस्वरूपत्वं न करणव्यापारायत्तम् । वै इति निर्धारणे,शास्त्रप्रमाणेन निश्चितत्वात्। तेषाम् = इन्द्रियाणाम् । प्रकाश-कत्वात् स्वयंप्रकाशत्वमुच्यते। निगमैरितिशेषः। यथा सैन्धवघनोऽनन्त-रोऽवाह्यः कृत्स्नो रसघन एव, एवं बारेयमात्माऽनन्तरोऽवाह्यः कृत्स्नः प्रज्ञानघन एव बृ०। ४। ५। १३। अत्रायं पुरुषः स्वयं ज्योतिर्भ-वतीतिश्रुतेः बृ०। ४। ३। ६। ११।

अत्र केचिदाहुः ज्ञातृत्वादिकमन्तः करणस्या, आत्मनस्तु साक्षि-तामात्रमिति तान् प्रत्याह ।

**ज्ञातृत्वमपि तेषां वै स्वाभाविकमतोऽस्ति हि ।**

नहि विज्ञातुरित्यादिश्रुतिभिः प्रतिपादितम् ॥१२॥

अतः स्वप्रकाशत्वादेव श्रुतिप्रमाणसिद्धं ज्ञातृत्वमपि तेषां जीवानां स्वाभाविकं नत्वौपाधिकं विज्ञातुर्विज्ञानाश्रयस्यात्मनो या विज्ञातिःगुणभूतविज्ञानं, तस्या विनाशो नास्ति नित्यत्वादित्यर्थः । १२ ।

उक्तार्थं स्मृतिप्रमाणेनापि समर्थयति ।

एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।
इत्युक्तं श्रीमुखेनैव कृष्णेन परमात्मना ॥१३॥

एतद्भूतादिसङ्घातरूपं ममेदमिति यो वेत्ति आत्मनोभेदेन जानाति—तं क्षेत्रज्ञ इति तद्विद आत्मयाथात्म्यज्ञाःप्राहुः । क्षेत्रात् कृषीवलवत् क्षेत्रज्ञोऽत्यन्तविलक्षण इति प्रकर्षेणाहुरित्यर्थः । यद्यप्यतिप्राकृताः स्थूलोऽहं कृशोऽहं मनुष्योऽहमितिशरीराभेदेनात्मानमनुसन्दधते तथापि मम देहे सुखं मम देहे दुःखं मम देहे पीडा ममेदं शरीरमिति भेदेनाऽपि बहवोऽनुसन्दधानाः दृश्यन्तेऽतस्तद्विद इत्युक्तं तस्मादतिमूर्खाणां देहात्मनोर्विवेकाभावेऽपि शास्त्राधिकारिणां तद्विवेकोऽस्त्येवेत्यर्थः । १३ ।

इत्यात्मनः स्वाभाविकज्ञातृत्वसमर्थनम् ।

ज्ञानस्वरूपस्यात्मनः ज्ञानाधारत्वं कथमित्याशङ्क्याह ।

उभयोर्ज्ञानयोः साम्यं भासते चात्र यद्यपि ।
तथाऽपि धर्मिधर्मत्वं भेदे ज्ञेयं नियामकम् ॥१४॥

उभयोः स्वरूपात्मकज्ञानधर्मभूतज्ञानयोरभेदे ज्ञानस्वरूपस्यात्मनो ज्ञानाश्रयत्वाऽभिधाने स्वस्मिन् स्ववृत्तित्वाभावेनाधाराधेयभावो नोपपद्यते । अत्र ज्ञानस्वरूपे आत्मनि, इति शङ्कार्थः । ज्ञानस्वरूपात्मा धर्मी ज्ञानं

तद्धर्मः तथा च धर्मित्वेन धर्मत्वेन च ज्ञानयोर्विजातीयत्वादाधाराधेयभावो-पपत्तिरित्याह-तथापीति । १४ ।

उक्तार्थं दृष्टान्तेन परबुद्धयारूढं करोति ।

**मणिद्युमणिदीपादिष्वद्धा भेदोऽपि दृश्यते ।**
**प्रभाप्रभावतोस्तत्राभेदस्तेजस्त्वतोपि च ॥१५॥**

मणिः हीरकादिः द्युमणिः सूर्यः प्रदीपः, एषु द्युमणित्वेन प्रभात्वेन भेदः साक्षात् भासते प्रभावान् सूर्य इति प्रतीतौ, प्रभाप्रभावतोस्तेजस्त्वेनाभेदोऽपि दृश्यते ॥१५॥

तयोर्भेदं स्पष्टयति—

**प्रभावत्त्वप्रभात्वाभ्यां भेद आवालमस्ति हि ।**
**जले क्षिप्तं जलं यद्वत्तिलराशौ यथा तिलम् ॥१६॥**
**भेदाभानेऽपि भेदस्तु सिद्धयत्येव हि वृद्धितः ।**
**तथा ज्ञानस्वरूपेऽपि ज्ञातृत्वं ज्ञायते बुधैः ॥१७॥**

हि यस्मात् आवालं वालमभिव्याप्य प्रभावत्त्वप्रभात्वाभ्यांभेदोऽस्ति प्रभात्वावच्छिन्नधर्मतानिरूपितप्रभावत्त्वावच्छिन्नधर्मितायाः सत्त्वादाधाराधेयभाव उपपद्यत इति भावः । जलप्रक्षिप्तजले तिलराशौ चात्यन्तसाजात्येन भेदाग्रहेऽपि भेदस्य सत्त्वमेवास्ति जले निक्षिप्तं जलं भिन्नत्वेनावस्थातुमर्हति, सावयवद्रव्यत्वात्, पार्थिवरजसि निक्षिप्तपार्थिवरजोवत्, तिलराशौ निक्षिप्ततिलवच्चेत्यनुमानं द्रष्टव्यम् । अन्यथा जलस्य वृद्धिर्नस्यात् प्रागुपदर्शितदृष्टान्तेन ज्ञानस्वरूपस्यात्मनो ज्ञातृत्वं श्रुतिभिर्विद्वद्भिर्ज्ञातुं शक्यते, बुधैरित्युक्त्या योऽयं वेद जिघ्राणीति पुरुष एव द्रष्टा श्रोता रसयितेत्यादिश्रुतीनां प्रामाण्यमुक्तार्थे स्फोरितम् ॥१६॥१७॥

इत्यात्मनो ज्ञातृत्वोक्तिनिर्वाहः—बुद्धिवृत्तौ चेतनः प्रतिविम्बति

प्रतिविम्बश्च विषयविषयिणोस्सम्बन्धः, तस्य च बुद्धिधर्माणां ज्ञातृत्वादीनां चैतन्य उपचारादहं जानामीति व्यवहार इत्याह—

चैतन्यं बुद्धिवृत्तौ यत्प्रतिविम्बितमस्ति वै ।
तदेव व्यवहारार्थं ज्ञानत्वेनोपचर्य्यते ॥१८॥

दर्पणस्थानीयायां बुद्धिवृत्तौ यत् चैतन्यं प्रतिविम्बितमस्ति तदेव व्यवहारार्थं ज्ञानत्वेन उपचर्य्यते वृत्तिप्रतिविम्बितचेतने ज्ञानत्वं भाक्तमित्यर्थः ॥ १८ ॥

अतिरिक्तं स्वरूपात्तु ज्ञानं किञ्चिन्न विद्यते ।
इति यदुच्यते कैश्चित्तदयुक्तं विरोधतः ॥१९॥

स्वरूपाद्भिन्नं ज्ञानं नास्ति चेत्तदा ज्ञानाश्रयत्वं प्रत्यगात्मनां कथमुपपद्यत इति भावः। मायावादिभिर्यदुक्तं, तन्न, विरोधात्। तथाहि—"विज्ञातारमरे केन विजानीयात्" "जानात्येवायं पुरुष" इत्यादिश्रुत्या ज्ञानाश्रयत्वस्य "विज्ञानं यज्ञं तनुते" "यो विज्ञाने तिष्ठन्नि" त्यादिश्रुत्या ज्ञानस्वरूपस्य चात्मनःप्रतिपन्नत्वात्—आत्मा ज्ञानाश्रयो ज्ञानस्वरूपश्च स्वरूपातिरिक्तज्ञानानभ्युपगमे तु ज्ञानस्वरूपप्रतिपादकज्ञानाश्रयत्वबोधकश्रुत्योर्विरोधः प्रसज्येत ॥१९॥

बुद्धिप्रतिविम्बितचेतने ज्ञानत्वोपचारात् व्यवहारः सिद्ध्यतीतियदुक्तं तन्निरस्यति।

औपचारिकज्ञानेन ज्ञानकार्यं भवेद्यदि ।
शूद्रोऽपि ब्राह्मणत्वेन कल्पितेन भवादृशैः ॥२०॥
होमादिष्वधिकार्यो हि लोके पण्डितमानिभिः ।
औपचारिकरूपेण यूपादित्येन वै तमः ।
नश्यतामिति कुत्रापि नैव दृष्टं श्रुतं तथा ॥२१॥

यदि काल्पनिकज्ञानेन व्यवहारः सिद्धयेत्तदा कल्पितब्राह्मणत्वेन शूद्रस्यापि यागादावधिकारः स्यात्। स्याच्च काल्पनिकेन यूपादित्येन तमसो निवृत्तिः। साच न दृष्टचरा युक्ता वा ॥२१॥

( इत्यात्मनः स्वाभाविकज्ञातृत्वसमर्थनम्। )

यदि वृत्तिचेतनयोर्विम्बप्रतिविम्बभावः सिद्धयेत्तदोक्तव्यवहारः स्यात्, स एव न सम्भवति प्रतिविम्बं प्रति उपाधेर्विम्बस्य च सावयवत्वरूपवत्त्वस्य प्रयोजकत्वात् प्रकृते च विम्बश्चेतनो न रूपी नाप्यवयववान्, उपाधिरूपा बुद्धिर्न रूपवती नाप्यवयववतीत्याशयेन प्रतिविम्बवादमाक्षिपन्नाह—

रूपावयवहीनस्य प्रतिविम्बो न विद्यते।
आकाशस्य जले तत्त्वं सावयवत्त्वतः खलु ॥ २२ ॥

सावयवस्य रूपादिमत एव प्रतिविम्बो दृश्यते नतु रूपादिरहितस्य। तथाच नीरूपस्य निरवयवस्य च चैतन्यस्य तथाभूतायां बुद्धिवृत्तौ प्रतिविम्बो न सम्भवतीत्यर्थः

अपिच सूर्यतारादिप्रभायुक्तस्य स्वस्य वै
दृश्यते प्रतिविम्बो हि केवलस्य तु न क्वचित् ॥ २३ ॥
रसादीनां च कालादौ कालादीनां रसादिषु।
प्रतिविम्वो भवेत्स वै नैव दृष्टः श्रुतस्तथा ॥ २४ ॥

नीरूपस्य निरवयवस्य चाकाशस्य जले प्रतिविम्बदर्शनादुक्तनियमे व्यभिचारमाशङ्क्य निराकरोति। आकाशस्येति। तत्त्वम् = प्रतिविम्बत्वम्। तत् = आकाशम्। पञ्चीकरणप्रक्रियायामाकाशे सावयवत्वरूपित्वचाक्षुषत्वादीनां धर्माणां सत्त्वात्तत्प्रतिविम्बो जले दृश्यत एवेत्यर्थः ॥२२॥
सावयवे रूपवति प्रत्यक्षगोचर एव द्रव्ये नीरूपस्य रूपस्य प्रत्यक्षगोच-

रस्वाश्रयद्रव्यविशिष्टस्यैव प्रतिविम्बो यथा दृश्यते, तथा सूर्यचन्द्रादिस प्रभामण्डलयुक्तस्यैवाकाशस्य प्रतिविम्बः न केवलस्य तस्य, अन्यथाऽन्धकारेऽपि तद्दर्शनापत्तेर्न तत्र व्यभिचारावकाश इत्याशयेन पक्षान्तरमाह-अपिचेति। यदि नीरूपस्य निरवयवस्य प्रतिविम्बःस्यात्तदा रसादीनां शब्दादौ प्रतिविम्बत्वापत्तिः। नच तथा श्रूयते दृश्यते वा कुत्रापीति, विपक्षे वाधकतर्कमुपन्यस्यति—रसादीनामिति। यद्युक्तनियमो नाभ्युपेयते तदा काले रसस्य तत्र कालस्य च प्रतिविम्बत्वापत्तिः स्यात्सा च न दृष्टचराश्रुतावेत्यर्थः॥ २३।२४॥

इति बुद्धिवृत्तौ चैतन्यस्य प्रतिविम्बो ज्ञानमितिपक्षस्य निरासः।

एतेनैव हि जीवस्य ब्रह्मणः प्रतिविम्वता।
निरस्ता दोषतुल्यत्वाद्ब्रह्मोपाध्योस्तथात्वतः ॥२५॥

विम्बस्थानीयं ब्रह्म जलस्थानीयेऽन्तःकरणाद्युपाधौ प्रतिविम्बितं सज्जीवभावमापद्यते, उपाधेश्चाविद्याकल्पितत्वात्तत्प्रयुक्तो भेदः, यथा सूर्यस्य जलपूरितेषु घटेषु तत्र तत्र प्रतिविम्बाद्भेदो घटोपाधिकृतो-भेदश्च, तत्रैकस्मिन् चाल्यमाने घटजले तद्गतस्यैव प्रतिविम्बस्य कम्पादियोगो नान्येषां प्रनिविम्वानां, एकस्मिंश्च घटनाशे तद्गतस्यैकस्यैव प्रतिविम्बस्य विम्बभावापत्तिर्नान्येषां तथैकस्मिन्नन्तःकरणे सुखदुःखाद्यात्मना परिणामे सति तदैकस्यैव चेतनप्रतिविम्बस्य सुखदुःखाद्यनुभवो नान्येषां प्रतिविम्बानाम्, तथाचैकस्मिन्नुपाधौ तत्त्वमस्यादिवाक्यजन्यजीवब्रह्मैक्यज्ञानान्नाशापन्ने तस्यैव ब्रह्मभावापत्तिलक्षणो मोक्षो नान्येषामिति सुखदुःखभोगसाङ्कर्याभावव्यवस्थोपपत्तिर्वन्धमोक्षोपपत्तिश्चेतिशङ्कां प्रतिक्षिपन्नाह। एतेनैवेति। प्रागुपदर्शितदोषप्रेणेति तदर्थः। अयम्भावः। यथा सूर्यरूपविम्बस्य जलादिरूपोपधेश्च रूपवत्त्वात्सावयवत्वात् परिच्छिन्नदेशवृत्तित्त्वेन सदेशत्वाच्च प्रतिविम्वभावो युक्तः प्रकृते विम्बस्य ब्रह्मणो नीरूपत्वान्निरवयवत्वोत्सर्वगतत्वाच्चोपा-

धेरपि नीरूपत्वनिरवयवत्वाभ्यां प्रतिबिम्बभावस्य सर्वथैवासामञ्जस्यतेति जीवस्य ब्रह्मप्रतिम्बता निरस्ता, उक्तदोषसाम्यात्। तथात्वतः = विम्ब-स्थानीयब्रह्मणोनीरूपत्वान्निरवयवत्वाच्च। अन्तःकरणरूपोपाधेरविद्या-रूपोपाधेर्वा नीरूपत्वान्निरवयवत्वाच्चेत्यर्थः ॥२५॥

इति जीवस्य ब्रह्मप्रतिविम्बतानिराकरणम्।

अवच्छेदवादिनः किल मन्यन्ते एक एवात्मा विभुस्तत्तदुपाध्यवच्छि-न्नोभिन्नतया प्रतीयते घटावच्छिन्नाकाशवत् स्वस्वोपाधिभिरवच्छिन्ना-आत्मानः स्वीयस्वीयसुखदुःखादिकं साक्षात्कुर्वन्ति, अतो न सुखदुःख-साङ्कर्यम् ,अवच्छेदकोहि तत्तदन्तःकरणरूपोपाधिः,अविद्यावेति तन्मतं निरस्यति—

तथावच्छेदवादोऽपि नैव सिद्धयति तन्मते।
ब्रह्म तु छेदनानर्हं छेद्ये नश्वरता भवेत् ॥२६॥
तथात्वे सर्वगतत्वाद्यजत्वादिविषयं वचः।
वाध्येत तन्मत एव जीवानादित्वभङ्गता ॥२७॥

न तावदुपाधिनाछिन्नो ब्रह्मखण्डो जीवात्मा,सर्वगतस्य निरवय-वस्य ब्रह्मणश्छेदनानर्हत्वात् 'निष्कलं निष्क्रियं शान्तमितिश्रुतिवा-क्यात्। छेदनार्हत्वे च ब्रह्मणो नश्वरत्वमापद्येत. तथात्वे = नश्वरत्वे। "अजोह्येको जुषमाणोऽनुशेते" "नित्यः सर्वगतः स्थाणुः" प्रकृतिं पुरुषञ्चैव विद्धयनादी उभावपीति प्रत्यगात्मनोऽजत्वानादित्वप्रतिपादिकाः-श्रुतयो वाध्येरन्। तन्मते मायावादिमत एव जीवात्मनोऽनादित्वं तैरपि स्वीकृतं तस्य भङ्गः स्यात् जीवस्य सादित्वपक्षे॥ २६। २७॥

उपाध्यावरणपक्षेऽपि तत्तदुपाधीनां विभुत्वमणुत्वम्बेतिविकल्-पद्वयमाह—आवरण इति। आद्यपक्षं निरस्यति

आवरणेऽप्युपाधिर्हि विभुर्वाऽणुर्विवक्षितः ।
आद्ये ब्रह्मस्वरूपस्य सर्वस्यावरणं भवेत् ॥२८॥

यदि तत्तदुपाधीनां विभुत्वमुररीक्रियते तदा सर्वस्यावृतत्वेना प्रपञ्चस्यान्ध्यं प्रसज्येत प्रकाशकाभावात्। नोपपद्येरन् उत्क्रान्तिगत्यागत्यादयः। स्याच्च मुक्तोपसृप्यस्य ब्रह्मणोऽभावः। "ब्रह्मविदाप्नोतिपरम्" "मुक्तोपसृप्यत्वव्यपदेशात्" "मामेवैष्यसि सत्यन्ते प्रतिजाने प्रियोसि मे। वहवो ज्ञानतपसा पूता मद्भावमागता" इतिश्रुतिसूत्रस्मृतयो वाध्येरन् ॥ २८ ॥

जगतोप्यन्धतापत्तिः स्यादुत्क्रान्तिगती नच ।
सम्भवेतां मते तस्मिंस्ततोऽदृष्टं प्रचक्ष्यते ॥२६॥
उपाधेः परिच्छिन्नत्वे गत्यादौ सम्भवत्यपि ।
दोषान्तरस्य सत्त्वाच्च तद्यथा प्रतिपाद्यते ॥३०॥

एतस्मिन् = उपाधेर्विभुत्वपक्षे उत्क्रान्तिगती न सम्भवेतामिति योजना ततः = तस्माद्दोषात् अदृष्टम्, अणुत्वम्। उपाधीनामिति शेषः ॥ २६ ॥

उपाधेः परिच्छिन्नत्वपक्षे उत्क्रान्त्यादिव्यवस्थासम्पत्तावपि दोषान्तरस्य सत्त्वादुपाधीनां परिच्छिन्नत्वपक्षोऽपि न साधीयान्। कोऽसौ दोष इत्यत आह—तद्यथेति। तत् दोषान्तरं यथाऽस्ति तथा प्रतिपाद्यत इत्यर्थः ॥ ३० ॥

दोषं निर्वक्ति—घटस्येति। यथा घटे गच्छति तदवच्छिन्नाकाशस्य गमनमनुपपन्नं तथा उपाधिगमनवेलायां तदवच्छिन्नस्याद्वितीयस्य परब्रह्मणो गमनं नास्ति तस्य सर्वगतत्वात्—

घटस्य गमने यद्वदाकाशो नैव गच्छति ।
उपाधेर्गमने ब्रह्मगमनासम्भवस्तथा ॥ ३१ ॥

अतो मुक्तस्य शुद्धस्य चिन्मात्रस्य हि ब्रह्मणः ।
वन्धापत्तिश्च वद्धस्य मुक्तिर्भूयात्पदे पदे ॥३२॥

अतः = उपाधिगमनेन ब्रह्मगमनानुपपत्तेः । उपाधौ गच्छति सति स्वावच्छिन्नब्रह्मप्रदेशकर्षणायोगादनुक्षणमुपाधिसंयुक्तप्रदेशभेदात् क्षणे क्षणे वन्धमोक्षौ भवेतां नित्यमुक्तप्रदेशोऽकस्माद्बध्येत, अनादिवद्धश्च स्वयमेवाकस्मान्मुच्येत ॥३१॥३२॥ दोषान्तरमाह—कृतहानेति ।

इत्युपाधेरणुत्वनिरसनम्

उपाधीनां मध्यमपरिमाणत्वपक्षोऽपि न सम्भवदुक्तिक इत्याह—

कृतहानाकृतापत्तिर्दोषः स्याच्च न संशयः ।
देहे सर्वत्रदुःखादेरनुभूतिश्च नो भवेत् । ३३ ॥
उपाधेर्मध्यमे माने वाह्यपक्षं हि स्वीकृतम् ।
तथात्वे देहवच्चात्माऽनित्यः सावयवो भवेत् । ३४ ॥
उपाध्यणुत्वतो जीवाणुत्वञ्चेति मतं गतम् ।
तस्मादेतन्मतं विज्ञैर्दूराद्धेयं प्रयत्नतः । ३५ ॥

उपाधेर्मध्यमपरिमाणाभ्युपगमे शरीरे सर्वत्र सुखदुःखादीनामनुभवो नोपपद्येत, वेदवाह्यानां मते प्रवेशश्च स्यात् ॥३४॥ दोषान्तरमाह—तथात्व इति । उपाधेर्मध्यमपरिमाणत्व इति तदर्थः । यद्यद् मध्यमपरिमाणं तत्तदनित्यं सावयवञ्चेति नियमेन जीवात्मनोर्मध्यमपरिमाणत्वेऽनित्यत्वं सावयवत्वञ्च प्रसज्येत । उपाध्यणुत्वनिरूपितजीवात्मनोऽणुत्वमिति तव सिद्धान्तस्य भङ्गस्स्यात् ॥३५॥

निगमयति तस्मादिति । श्रुतिस्मृतियुक्तिविरुद्धत्वान्नादरणीयोऽवच्छेदवादो विद्वद्भिः ॥

( इत्यवच्छेदवादभङ्गः )

अयञ्चात्मा कर्त्ता भोक्तृत्वात् चेतनोऽहं करोमीति प्रतीत्या आत्मनि कृत्याश्रयत्वरूपं स्वाभाविकं कर्तृत्वमित्याह—

**कर्तृत्वमपि शास्त्रेषु तेषां स्वाभाविकं श्रुतम् ।**
**विज्ञानं यज्ञमित्यादिश्रुतिराह सनातनी । ३६ ॥**

तेषाम् = प्रत्यगात्मनां । स्वाभाविकं कर्तृत्वं शास्त्रेषु श्रुतम् । नच जपाकुसुमस्थं लौहित्यं स्फटिक इवान्तःकरणगतं कर्तृत्वमात्मन्यध्यस्यते, नतु तात्त्विकं, निर्विकारत्वश्रुतिविरोधात्, सुषुप्तौ बुद्ध्यभावे कर्तृत्वादर्शनाच्चेति वाच्यम् । तथासति रक्तं कुसुममितिवत्कदाचित् मनः कर्त्रितिप्रमा लोहितस्स्फटिक इतिवच्चैतन्यं कर्त्रितिभ्रमश्च स्यात् सुषुप्तावन्तःकरणाभावेऽप्यात्मनि श्वासादिकर्तृत्वदर्शनात् भूर्भूरित्येव श्वसितीतिश्रुतेश्च, आत्मनि कर्तृत्वस्यौपाधिकत्वासम्भवात् किञ्चात्मनोऽकर्तृत्वे बुद्धिरेव श्रवणादिकर्त्रीति तस्या एव तत्फलंमोक्षोऽपि स्यात्, "शास्त्रफलं प्रयोक्तरीति न्यायात्, अन्यथाऽतिप्रसङ्गादित्याशयेन स्वाभाविकंकर्तृत्वमभिहितम् ॥३६॥

श्रुतिसूत्रमानेन स्वाभाविकं कर्तृत्वं प्रत्यगात्मनां समर्थयति ।

**कर्ता शास्त्रार्थवत्त्वादित्यादिकं सूत्रमेव च ।**
**सूत्रकारमतं प्राह तस्मादित्येव सम्मतम् ॥ ३७ ॥**
**यत्तु निषेधकं वाक्यं कर्तृत्वस्यात्मनोऽस्ति हि ।**
**.................................. । ३८ ॥**

स्वाभाविकं कर्तृत्वमाह श्रुतिरिति योजना "विज्ञानं यज्ञं तनुत, इतिश्रुत्या विज्ञानस्वरूपस्य प्रत्यगात्मनो यागकर्तृत्वं बोध्यते सनातनीत्युक्त्या प्रत्यगात्मनां स्वाभाविकं कर्तृत्वं स्फोरितम् । ननु "विज्ञानं यज्ञं तनुते, इति श्रुतौ विज्ञानशब्देन बुद्धेरेव ग्रहणं नतु जीवात्मन इति

चेन्न। यतः बुद्धेः कर्तृत्वाङ्गीकारे शक्तिविपर्य्ययात् करणशक्तिर्हीयेत कर्तृशक्तिः स्यात् किञ्च बुद्धेःकर्तृत्वे भोक्तृशक्तिरपि बुद्धेरेव स्यात् एवं सति वन्धमोक्षौ बुद्धेरेव प्रसज्येयाताम्। "एवं तन्मनोऽनुकुरुतेति" श्रुतौ मनसः कृतिकर्मत्वस्य "शृण्वन्तश्श्रोत्रेण विद्वांसो मनसा" इत्यादिश्रुतौ "शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः" इति स्मृतौच करणत्वस्य प्रतिपन्नत्वेन कर्तृत्वासम्भवात्, कर्तृत्वकर्मत्वयोरेकत्रा-सम्भवस्य "कर्तृकर्मव्यपदेशाच्च" इतिसूत्रसिद्धत्वात्। "मन उत्क्रामन् मिलित इवाश्नन् पिवन्नास्ते वा,, इत्यादिश्रुतौ मनस उत्क्रमणेऽप्यात्मनः कर्तृत्वस्य तथा "परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वायानैर्वा" इत्यादिस्वरूपाविर्भाव-रूपमुक्तावपि कर्तृत्वस्य च प्रतिपन्नत्वेन नास्यौपाधिकतासम्भवः। तच्च कर्तृत्वं परमपुरुषहेतुकमिति "कर्त्ता शास्त्रार्थवत्त्वात्" परात्तुतच्छ्रुतेः इत्यधिकरणयोः प्रपञ्चितम्। सूत्रमुदाहरति—कर्त्तेति। सूत्रकारो भग-वान् वादरायणस्तस्य मतं कर्ता शास्त्रार्थवत्त्वादित्यादिकं सूत्रमेवाहेति योजना। तस्मादिति। सूत्रकारसम्मतत्वादेव प्रत्यगात्मनां स्वाभाविकं कर्तृत्वं पूर्वाचार्य्यसम्मतमित्यर्थः। आत्मैव कर्त्ता "स्वर्गकामोयजेत" मुमुक्षुर्ब्रह्मोपासीतेत्यादेर्भुक्तिमुक्त्युपायवोधकस्य शास्त्रस्यार्थवत्त्वादिति सूत्रार्थः ॥३७॥ ३८ ॥

"हन्ताचेन्मन्यते हतम्, उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इत्यादिशास्त्रैरात्मनः कर्तृत्वनिषेधे कागतिरित्यत्राह — यत्तु निषेधकमिति—

**यत्तु निषेधकं वाक्यं कर्तृत्वस्यात्मनोऽस्ति हि।**
**स्वातन्त्र्यविषयं तच्च शास्त्रेणैवेति ज्ञायते। ३९ ॥**

आत्मनः कर्तृत्वस्य निषेधकं वाक्यं हन्ताचेन्मन्यते हतमिति-

कठवल्ल्युक्तं यदस्ति तद्वाक्यं स्वातन्त्र्यविषयं प्रत्यगात्मनां स्वतन्त्रकर्तृत्वनिषेधपरमिति शास्त्रेण ज्ञायते निश्चीयते। विपक्षे वाधकतर्कमुपन्यस्यति। अन्यथेति। कर्तृत्वमात्रप्रतिषेधे श्रुतिप्रमाणैरवधारितं प्रत्यगात्मनां कर्तृत्वादिकं नोपपद्येतेत्यर्थः। कर्तृत्वाभावादेव प्रत्यगात्मनां कर्तृत्वादिवोधिकाः श्रुतयो वाध्येरन्। अयम्भावः "न जायते म्रियते वा विपश्चिदि"-तिमन्त्रे न हन्यते हन्यमाने देह इति देहातिरिक्तस्यात्मनो हननायोग्यत्वेन प्रकृतत्वात्तद्विषयतयोपपद्यते। कर्तृत्वप्रतिषेधकानि भगवद्वचनानि प्रकृतिगुणादिमनपेक्ष्य केवलस्य जीवस्य कर्तृत्वप्रतिषेधकानि सन्ति। तस्य "तत्रैवं कर्त्तारमात्मानं केवलन्तु यः। पश्यत्यकृतवुद्धित्वान्न स पश्यति दुर्मतिरिति वचनान्तरेणैकार्थ्यात्, तत्र केवलशब्दः स्वातन्त्र्यपरः सांसारिकप्रवृत्तावधिष्ठानादिपञ्चकस्य हेतुत्वात् केवलं स्वातन्त्र्येण स्वात्मानं कर्त्ता मन्यमानो दुर्मतिरित्यर्थः। सर्वथा कर्तृत्वप्रतिषेधे तु केवलपदस्य वैयर्थ्यं प्रसज्येत, अन्यथा गुणादीनां कर्तृत्वे तेषामेव भोक्तृत्वापत्तिस्तयोस्सामानाधिकरण्यनियमात्, नह्यन्यकर्तृककर्मणामन्येषा भोक्तृत्वं कुत्रापि प्रसिद्धम्। अपिच गुणकर्तृकप्रवाहस्य नित्यत्वेनानिर्मोक्षप्रसङ्गो मुक्तानामपि भोक्तृत्वप्रसङ्गश्च दुर्वारः इतरकर्तृकत्वप्रसङ्गात्। किञ्च दैवञ्चात्र पञ्चममित्यत्र दैवशब्दः परमात्मपरः तथाच परमात्माधीनमेव प्रत्यगात्मनः कर्तृत्वम्। "स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशतापी"त्यादिश्रुतेः। वद्धावस्थायां प्रत्यगात्मनां सङ्कुचितज्ञानक्रियाशक्तिकतया ज्ञानक्रियादिजनने मनआदीनां सहकारित्वं मुक्तावस्थायान्तु स्वपरस्वरूपाविर्भावेन वुद्धीन्द्रियनिरपेक्षत्वमिति विवेकः। "सर्वं हि पश्यति सर्वमाप्नोति सर्वश इति" श्रुतेः। एवं भोक्तृत्वादयोऽप्यूहनीयाः, तथाहि–सुषुप्त्यादौ सुखादिभोक्तृत्वे प्रत्यभिज्ञाया मोक्षापत्तौ "जक्षन् क्रीडन्नित्यादिश्रुतेश्श्रमानत्वात् कर्तृत्वभोक्तृत्वयोरेकाधिकरणत्वनियमात्तत्स्वाभाविककर्तृत्वाद्याश्रयत्वं प्रत्यगात्मनां सिद्धम्। ३६।

प्रत्यगात्मनां कर्तृत्वबोधकवचनानां बाध्यत्वं स्यादितीष्टापत्ति-माशङ्क्याह—

**कर्तृत्वविषयं शास्त्रमन्यथा बाध्यतामियात् ।**
**तन्नेष्टमास्तिकानान्तु वरिष्ठश्चोक्तमेव हि ॥ ४० ॥**
**सुषुप्तावपि सद्भावो ज्ञातृत्वेनानुमीयते ।**
**वद्धावस्थासु तज्ज्ञानमावृतं कर्मसञ्ज्ञया ॥ ४१ ॥**

आस्तिकानां तत् = कर्तृत्वबोधकशास्त्राणां बाध्यत्वं नेष्टम् । हि यतः प्रत्यगात्मनां कर्तृत्वं वरिष्ठम्, उक्तम्, श्रुतिसूत्रस्मृतिभिरितिशेषः । यद्यात्मनां कर्तृत्वं स्वाभाविकञ्चेत्तदा सुषुप्तावपि तद्भासेत इत्याशङ्कामाक्षिपति—सुषुप्तावपीति । कर्तृत्वसत्त्वं ज्ञातृत्वेनानुमीयते सुषुप्तावाप्यात्मा कर्त्ता ज्ञातृत्वादिति प्रयोगः सुषुप्त्यादौ सुखादिभोक्तृत्वं प्रत्यगात्मनां सुखमहमस्वाप्सं नकिञ्चिदवेदिषमितिप्रत्यभिज्ञामानसिद्धम् । तज्ज्ञानम्, तस्य प्रत्यगात्मनो ज्ञानं धर्मभूतं कर्मसञ्ज्ञया अनाद्यविद्यया आवृतं सङ्कुचितं तस्मात् = प्रत्यगात्मनां धर्मभूतज्ञानसङ्कुचितत्वात् तज्ज्ञानं विशेषविषयं न खल्विति निषेधार्थकः । प्रातिस्विकरूपेण विषयो न प्रकाशत इति भावः । ४० । ४१ ।

उक्तार्थं विशदरूपेण विवृणोति ।

**अनाद्यविद्यया तस्माद्विशेषविषयं खलु ।**
**कर्तृत्वं करणाधीनं विज्ञेयं प्रत्यगात्मनाम् ॥ ४२ ॥**
**सुषुप्त्यादौ लयात्तेषां तदधीनं विरोधिनः ।**
**दाहकत्वाश्रयस्याग्नेर्यथा काष्ठादियोगतः ॥ ४३ ॥**

प्रत्यगात्मनाम् = जीवानां कर्तृत्वं करणाधीनम्, इद्रियसापेक्षं तेषां सुषुप्त्यादौ लयात् तदधीनं—करणाधीनं कर्तृत्वं विशिष्य तद्-

भानं न विरुद्ध्यते विरोधिन इत्यस्याग्रिमकारिकास्थाग्निपदेन सममन्वयः। स्वाभाविककर्तृत्वाद्याश्रयस्यैवात्मनः स्वाभाविकदहनशक्त्याश्रयस्याग्नेः काष्ठादिसम्बन्धेन तदाविर्भाववत् करणादिसम्बन्धनिमित्तकस्तदाविर्भाव उपपन्नतर इत्याह—

**स्वाभाविकाऽपि तच्छक्तिराविर्भवति नान्यथा।**
**तथा स्वाभाविकस्यापि कर्तृत्वस्याश्रयात्मनः॥ ४४॥**

विरोधिनः काष्ठादिविरोधिनः दाहकत्वाश्रयस्याग्नेस्तृणतूलादि-संसर्गात् स्वाभाविकाऽपि स्वतः सिद्धाऽपि तच्छक्तिः तस्याग्नेर्दाहिका-शक्तिर्यथाऽऽविर्भवति नान्यथा = अन्यथा प्रकारान्तरेण नाविर्भवति तथा आत्मनः = प्रत्यगात्मनः स्वाभाविकं कर्तृत्वं करणसंसर्गनिमित्त-कमाविर्भूयते तदाविर्भावः = स्वाभाविककर्तृत्वाविर्भावः। ४३।४४।

इति जीवात्मनां कर्तृत्वसमर्थनम्।

करणक्रियादिनिमित्तकात्मनिष्ठकर्तृत्वकल्पने महागौरवाद् वरीयान् उपाधेरेव कर्तृत्वाभ्युपगम इत्याशङ्कां प्रतिक्षेप्तुमाह।

**करणेन निमित्तेन तदाविर्भाव इष्यते।**
**येत्वात्मनो न कर्तृत्वमुपाधेरेव लाघवात्॥ ४५॥**
**इत्याहुस्तज्जडत्वेनोपाधेर्नैवोपपद्यते।**
**अन्यथा जडरूपेषु चातिव्याप्तेर्घटादिषु॥ ४६॥**
**अपिचोपाधिसम्बन्धादकर्त्तुरपि चात्मनः।**
**कर्तृत्वं भवतीत्येवं वक्तुं नैव तु शक्यते॥ ४७॥**
**स्याच्चेन्नपुंसकस्यापि स्त्रियाः सम्बन्धमात्रतः।**
**प्रजोत्पत्तिश्च वक्तव्या देवानां हितकारिभिः।**

**सा न दृष्टा श्रुतावाऽपि चोपपन्ना न वा क्वचित् ॥४८॥**

येतु आत्मनः कर्तृत्वं न मन्यन्ते किन्त्वुपाधेरेव लाघवात् इत्याहु स्तन्न, उपाधेर्जडत्वेन कर्तृत्वाभावात्। तत=कर्तृत्वम्। विपक्षे वाधकतर्कमुपन्यस्यति—अन्यथेति। जडस्यापिकर्तृत्वाभ्युपगम इति तदर्थः। घटेऽपि कर्तृत्वमापद्येत। उपाधिसम्पर्कादात्मनः कर्तृत्वं न केवलस्योपाधेस्तथाच नोक्तातिप्रसङ्गावकाश इतिपक्षं दूषयितुमाह—अपिचेति। कर्तृत्वाभाववत आत्मन उपाधिसंसर्गात्कर्तृत्वमिति वक्तुं न शक्यत इति योजना यद्युपाधिसंसर्गादात्मनःकर्तृत्वमभ्युपेयते तदा नपुंसकस्यापि स्त्रीसंसर्गमात्रेण प्रजोत्पत्तिस्स्यात् सा न कुत्रापि दृश्यते श्रूयत इत्याह-स्याच्चेति। स्यात् उपाधिसम्बन्धादात्मनः कर्तृत्वं स्यादिति तदर्थः। देवानां हितकारिभिः=मूर्खैः॥ ४५।४६।४७।४८॥

( इति जीवात्मनामौपाधिककर्तृत्वभङ्गः )

सम्प्रति प्रत्यगात्मनां भोक्तृत्वं निरूपयति ॥

**एवमेव हि भोक्तृत्वं ज्ञातव्यं प्रत्यगात्मनः ।**
**तथा सुखादिभोक्तृत्वं सुषुप्त्यादौ च विद्यते । ४९ ॥**
**जक्षन् क्रीडन्नितिश्रुतिर्मोक्षेऽप्यस्यसाधिका ।**
**अहमर्थस्वरूपस्य सर्वावस्थासु चात्मनः ॥५०॥**

एवमेव-प्रागुपदर्शितप्रकारेण। प्रत्यगात्मनां भोक्तृत्वं ज्ञातव्य-मिति योजना सुषुप्त्यादौ प्रत्यगात्मनां सुखादिभोक्तृत्वं प्रत्यभिज्ञायाः मोक्षे भगवत्स्वरूपगुणादिविषयानुभवानन्दभोक्तृत्वे "जक्षन्क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति" श्रुतेश्च प्रमाणत्वात्। इति प्रत्यगात्मनां भोक्तृत्वम्.सम्प्रत्यहमर्थस्यात्मस्वरूपत्वं व्यनक्ति—अहमर्थेति ।४९।५०॥

**प्रत्यभिज्ञानुमानाद्यैः सत्यं निश्चीयते बुधैः ।**
**अहं करोमि जानामीत्यादयः प्रत्यया इह ॥ ५१ ॥**

वुधैः प्रत्यभिज्ञानुमानाद्यैः सर्वावस्थासु आत्मनोऽहमर्थस्वरूपत्वं सत्यं निश्चीयत इति योजना अहमर्थ आत्मा सर्वावस्थानुगतत्वादिति प्रयोगः, उक्तार्थं प्रमाणेन निर्धारयति-अहमिति । इह अहमर्थस्यात्मत्व-अहं करोमीत्यादयः प्रत्ययाः प्रमाणभूताः । ५१ ॥

ननु स्यादेतदस्मदर्थस्यात्मत्वं यदि सर्वावस्थाऽनुगतत्वमिति तदेव तु नास्ति सुषुप्त्यादौ व्यभिचारदर्शनादतः प्रकृतिकार्य्यरूप = एवाहं जानामीत्यादिप्रतीतिविषयोऽहमर्थः, "अहङ्कार इतीयं मे भिन्ना प्रकृति-रष्टधेति भगवदुक्तेरित्यत आह—

एतावन्तमहं कालं नहि किञ्चिदवेदिषम् ।
सुखमस्वाप्समित्याद्याः सुषुप्तौ प्रत्यभिज्ञिकाः ॥५२॥
सुखाज्ञानादिज्ञातश्चाभिन्नो ऽहमर्थ ईर्य्यते ।
ज्ञात्रभिन्नाहमर्थत्वं सृष्टेरादौ च विद्यते ॥ ५३ ॥

सुषुप्त्यादावहमर्थस्यावगमो मानसिद्धः, एतावन्तं कालं सुखमह मस्वाप्सं न किञ्चिदवेदिषम् ,एतावन्तं कालं मूर्छित एवासमित्यादि प्रत्यभिज्ञायाएव मानत्वात् तस्मात्सुषुप्त्यादावपि सुखाज्ञानविषयकज्ञाना-श्रयाभिन्नोऽहमर्थोऽनुगत एव विशेषविषयाभावेन विशेषविषयकप्रत्य-यस्यानुत्थानात् । ब्रह्मैवेदमग्र आसीत् सचात्मानं वेदाह ब्रह्मास्मि वहुस्यां प्रजायेय नामरूपे व्याकरवाणि, त्रिवृतं करवाणीत्यादयःश्रुतयस्सन्ति नापि ब्रह्मणो ज्ञात्रभिन्नाहमर्थस्वरूपत्वं सृष्टेःप्राक् प्रतिपाद्यते ॥५२।५३॥

उक्तार्थं श्रुतिमुखेन द्रढ़यति—

अहं ब्रह्मास्मि चैकोऽहं वहुस्यामिति चोक्तवत् ।
अद्वितीयं परं ब्रह्म तत्साम्यं भजतामपि ॥ ५४ ॥

वामदेवादिमुक्तानां तथैवानुभवः श्रुतः ।
अहंमनुरहं सूर्योऽभवमित्यादिकं श्रुतौ ॥ ५५ ॥

अत्रैकपदं ब्रह्मणः चराचराभ्यामुत्कर्षरूपप्राधान्यं विधत्ते। बहुस्यामित्यनेन बहुभवनसङ्कल्पत्वं कारणस्य प्रदर्शितम्, तस्योपादान-कारणत्वं सूचयितुमुक्तम्, बहुस्यामिति। अद्वितीयशब्दश्च तदाधिक्यं-नास्तीति बोधयति। "न तत्समश्चाभ्यधिकश्च दृश्यते" इतिश्रुत्यै-कार्थत्वात्। तत्साम्यम् = ब्रह्मसाम्यम्। तथैवानुभवः = अहमर्थानुभवः। तत्साम्यापन्नानामपि मुक्तानां वामदेवादीनामपि ज्ञात्रभिन्नाहमर्थ-स्वरूपत्वं श्रूयते। तद्धयेतत्-पश्य, ऋषिर्वामदेवः प्रतिपेदे, अहं मनु-रभवं सूर्य्यश्चेति ॥ ५४ । ५५ ॥

अस्मदर्थस्यैव जगज्जन्मादिकारणत्वमाह -

अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा ।
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥५६॥

अहमेव कृत्स्नस्य जगतः प्रभवः, प्रभवत्यस्मादिति प्रभवः। पर-मकारणं, तथा प्रलयः प्रलीयतेऽस्मिन्ननेनेति वा प्रलयः संहारस्थानं संहारकारको वा कर्ता संहर्त्ता चाहमेव हेगुडाकेश, जितनिद्र, सर्वेषां भूतानां प्राणिनामाशये हृदयेऽन्तर्यामिरूपेण स्थितः, आत्माऽह-मित्यर्थः। ५६ ।

सर्वचेतनाचेतनवस्तुजातस्य भगवदायत्तत्वं स्वस्य च स्वत-न्त्रत्वं सर्वधीप्रवर्त्तकत्वं सर्ववेदवेद्यत्वमाचार्य्यत्वञ्चाह—

सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च ।
वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम् ॥ ५७ ॥

सर्वस्य ब्रह्मादिप्राणिमात्रस्य हृदि सम्यगन्तर्यामिरूपेण निविष्टः

अतो मत्त एव हेतोः सर्वस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति। ज्ञानं विषयेन्द्रियसंयोगजो यथा-वस्तुविषयानुभवः। अपोहनञ्च स्मृतिज्ञानयोः प्रमोषो मत्त एव भवति। इन्द्राग्निसूर्यमित्रावरुणवाय्वादिप्रतिपादकैरपि वेदैरहमेव वेद्यः मम सर्वात्मकत्वात्, वेदान्तकृत् क्षेत्रज्ञानां नानाविधार्थप्रतिपादनपराणां परस्परं विरुद्धार्थतया संशये जाते अन्तकृत्। अविरोधकप्रकारेण निर्णयकर्त्ता सर्वगुरुर्वेदान्तसम्प्रदायप्रवर्तकोऽहमेव। "नमो-वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे," इतिश्रुतेः। नतु मत्तोऽन्यः स्वतन्त्रः कश्चिज्ज्ञातुं समर्थः। मन्निर्णीतार्थं मत्प्रसादान्मदभिधायिनं वेदं यो-वेद सोऽपि वेदवित्। अतोन्यथा वेदार्थं यो वक्ति न स वेदविदित्यर्थः॥ ५७॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
तेषामेवानुकम्पार्थमहमज्ञानजं तमः॥ ५८॥

नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि माशुचः॥ ५९॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितं जगत्॥ ६०॥

यस्मात् क्षरं पुरुषं भोग्यभूतं सर्वभूतात्मकं जडमतीतोऽहम्, अक्षराद्भोक्तुर्विज्ञानमयपुरुषादपि उत्तमः, उत्कृष्टः, तस्यापीशनशीलत्वात्। सर्वोत्कृष्टत्वमहमर्थस्यैवोक्तम्। तेषामेव प्रीतिपूर्वकं भजतामेवानुकम्पार्थमनुग्रहार्थम्, आत्मभावस्थो बुद्धिवृत्तौ स्थितः सन्नज्ञानजं प्राचीनकर्मरूपाज्ञानजं तमो धर्मभूतज्ञानावरणं भास्वता प्रकाशमानेन मद्विषयकज्ञानाख्येन दीपेन नाशयामि। अहं स्वतन्त्रः सर्वेश्वरः, मयि भक्त्यतिशयान्नित्यनैमित्तिककर्मानादरकारिणं मदेकशरणं त्वां सर्वपापेभ्योऽनेकजन्मस्वत्यक्ताकरणजनितानि वहुहायनानि जायमानानि प्रांक्तन भ-

विष्यद्वर्तमानानि पापानि तेभ्यः सर्वेभ्यो मोक्षयिष्यामि स्वसामर्थ्यादेवात्र सर्वपापनिवारकत्वमहमर्थस्यैव। तेषामुक्तप्रकारेण मय्यावेशितचेतसाम्, अहं वात्सल्यकारुण्यदयानिधिः मृत्योरपि मृत्युःस्वभक्तदुःखासहिष्णुर्मृत्युरूपात्संसारसागरादचिरेणैव समुद्धर्ता भवामि। संसारनिवारकत्वमहमर्थस्यैव। इदं कृत्स्नं निखिलं जगदेकांशेन, एकदेशस्याप्यत्यल्पांशेन, अयुतायुतांशेनेत्यर्थः। विष्टभ्य धृत्वा स्थितोऽहम् अहमर्थस्यैव सर्वप्रवृत्तिस्थितिजनकत्वम्॥ ५८।५९।६०॥

एवमाद्युक्तयो ज्ञेया अहमर्थत्वसाधिकाः।
श्रीकृष्णाख्यपरब्रह्ममुखपद्माद्विनिर्गताः ॥ ६१ ॥
गीताशास्त्रमपीत्थं वाऽहमर्थत्वस्य साधकम्।
तस्माद्वेदान्तशास्त्रे वै स्वरूपं प्रत्यगात्मनः॥ ६२ ॥
ज्ञात्रभिन्नाहमर्थत्वमितिसिद्धं विवेकिनाम्।
नचाध्यासप्रयुक्तत्वमहमर्थस्य विद्यते॥ ६३ ॥

एवमाद्युक्तय इति। 'वेदाहं समतीतानि वर्तमानानि चार्जुन' त्यस्मदर्थस्यैव सर्वज्ञत्वयोगः। तेषामहं समुद्धर्तेति संसारनिवारकत्वम्, "ममसाधर्म्यमागता" इति मुक्तोपसृप्यत्वम्, मामप्राप्यैव कौन्तेय ततोयान्त्यधमां गतिमिति तदप्राप्तेः संसारकारणत्वम्, "मामेकं शरणं व्रजेति सर्वशरण्यत्वम्, अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि माशुच" इतिसर्वपापनाशकत्वं तच्छरणागतस्य शोकाभावश्चेत्यादीनां स्वयमेव श्रीमुखेन गीतत्वात्। सर्वशास्त्रमयरूपाया गीताया अस्मदर्थाभिन्नसर्वज्ञानन्तविचित्रशक्त्याश्रयो भगवान् पुरुषोत्तमो रमानिवासः श्रीकृष्ण एव विषय इति निश्चीयते। उदाहृतहेतुगर्भितवाक्येभ्यः, अस्मदर्थाभिन्ना उक्तलक्षणलक्षणा जीवात्मान इति सिद्धमिति निगमयति, तस्मादिति। श्रीमद्भगवद्गीताशास्त्रस्याहमर्थसाधकत्वादिति तदर्थः। आत्मन्य-

हमर्थत्वमध्यासप्रयोज्यं न तु वास्तविकमित्याशङ्क्यापाकरोति—नचेति। अहमर्थस्याध्यासप्रयुक्तत्वं नच विद्यत इति योजना ॥५८।५९।६०॥

तत्र हेतुद्वयं निर्वक्ति—

**निराकरिष्यमाणत्वादयुक्तत्वाद्धि तस्य च ।**
**तस्मादध्यासवक्तॄणां भ्रान्तिमत्त्वं हि सिद्ध्यति ।६४॥**

अध्यासं नैव शक्नोति वक्तुमित्यग्रिमग्रन्थेन निराकरिष्यमाणत्वात्, हि—यतः तस्य—अध्यासस्य, अयुक्तत्वात्। आत्मनीति शेषः। अधिष्ठानारोप्यलक्षणप्रमाणसामग्र्यभावेन दृग्दृश्ययोराध्यासिकसम्बन्धानुपपत्तेरध्यासस्यासम्भवः। तस्मात् = अध्यासस्यायुक्तत्वात् ॥ ६४ ॥

इत्यहमर्थस्यात्मत्वनिरूपणम् ।

प्रत्यगात्मनां ज्ञानस्वरूपत्वं ज्ञातृत्वं कर्तृत्वं भोक्तृत्वमहमर्थस्वरूपत्वं शास्त्रमानेनैतावता प्रबन्धेन निरूप्य सम्प्रति तेषां हर्यधीनत्वं प्रमाणेन निरूपयति ।

**अथ शास्त्रादिमानेन हर्यधीनत्वमात्मनाम् ।**
**स्वरूपं वर्ण्यतेऽभिज्ञानुभवेन प्रसिद्धिमत् । ६५ ॥**
**परः स्वतन्त्र इत्युक्तः परमात्मा सनातनः ।**
**क्षेत्रज्ञा अस्वतन्त्राश्च श्रुत्यैवेति प्रकीर्तितम् । ६६ ॥**

अथेति भिन्नोपक्रमे। प्रत्यगात्मनां भगवदायत्तस्वरूपस्थितिप्रवृत्तिकत्वरूपं हर्यधीनत्वं स्वरूपं शास्त्रमानेन विद्वदनुभवेन च प्रसिद्धं वर्ण्यत-इति योजना। ६५। चिदचिद्भ्यां परः, उत्कृष्टः परमात्मा सर्वान्तर्यामी सनातनः—नित्यः। क्षेत्रं शरीरमात्मनो भेदेन जानन्ति ते क्षेत्रज्ञाः, जीवात्मानः। अस्वतन्त्राः = सर्वदेशसर्वकालीनवस्तुविषयकज्ञानादौ-

क्रियाप्रवृत्त्यादौ च स्वातन्त्र्याभाववन्तः। एतत्सर्वं श्रुतिमानेन निर्दिष्टम्। आत्मा हि परमः स्वतन्त्रोऽऽधिगुणो, जीवोऽल्पशक्तिरस्वतन्त्रोऽवर'' इत्यादिश्रुतय उक्तार्थे प्रमाणानि। ६६॥

सम्प्रत्युक्तार्थं श्रीमुखवचनेन द्रढयति—

सुखं दुःखं भवो भावो भयश्चाभयमेव च।
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः॥
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः।६७।

सुखम् = अनुकूलतया वेदनीयम्। दुःखम् = प्रतिकूलानुभवः। भवः = उद्भवः। अभावः = तद्विपर्ययः। भयम् = आगामिदुःखस्य हेतुदर्शनजन्यत्रासः। अभयम् = तन्निवृत्तिः। अहिंसा = मनोवाक्-कायैःप्राणिहिंसानिवृत्तिः। समता = रागद्वेषराहित्यम्। तुष्टिः = यथा-लाभेन सन्तोषः। तपः = शास्त्रीयव्रतोपवासनियमैः शरीरतापनम्। दानम् = न्यायार्जितस्य धनादेर्देशे काले पात्रे प्रतिपादनम्। यशः = औदार्यगुणवत्तया श्लाघा। अयशः = कार्पण्यादिदोषेण लोककुत्सनम् बुद्धिरित्यादयस्तद्विपरीताश्च भावाः पृथग्विधा = प्रतिव्यक्तिभिन्नाः प्राणिनां तत्तत्कर्मानुसारेण मत्त एव भवन्ति।६७।

उक्तमर्थं महाभारतवचनेनापि द्रढयति।

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्।
जगद्वशे वर्त्ततेऽदः। कृष्णस्य सचराचरम्।६८।
शास्त्रमित्यादिकं तस्मिन् प्रमाणत्वेन विद्यते।६९।
यदि जीवाः स्वतन्त्राः स्युस्तर्हि तेषां क्रियाः कृताः।
सिद्धा भवेयुस्ताः सर्वाः नैवं कुत्रापि दृश्यते।७०।

एके वाहनमारुढाश्चान्ये तु तस्य वाहकाः ।
कथमित्थं स्वतन्त्रा वै दुःखमिच्छन्ति जन्तवः ।७१।
तस्मात्सर्वास्ववस्थासु क्रियासु सकलास्वपि ।
हर्यधीनत्वमेवास्ति सर्वेषां प्रत्यगात्मनाम् ।७२।

प्रत्यगात्मनां सर्वनियन्तुःश्रीपुरुषोत्तमस्याधीनत्वमत्रार्थे श्रुतिप्रभृतयः प्रमाणत्वेनोपन्यस्ता इत्याह- शास्त्रमिति। तस्मिन् = प्रत्यगात्मनां हर्यधीनत्वे ।६६। उक्तार्थं तर्केणापि निर्धारयति- यदीति। यदि प्रत्यगात्मनां स्वातन्त्र्यमिष्यते तदा तत्कृतकर्मणां सदा सार्थकत्वं स्यान्नतु कुत्रापि नैष्फल्यमापद्येतेति तर्केणापि तेषां श्रीपुरुषोत्तमाधीनत्वं वक्तव्यमित्यर्थः ।७०। यदि जीवानां स्वातन्त्र्यं स्यात्तदा केचिज्जीवाः सुखिनः केचिज्जीवा दुःखिनःसन्ति, इति व्यवस्था नोपपद्येतेत्याह—एक इति। सर्वदेशवस्तुविषयकज्ञानादौ क्रियाप्रवृत्त्यादौ प्रत्यगात्मनां श्रीपुरुषोत्तमाधीनत्वं निगमयति-तस्मादिति ।७२।

सर्वेश्वरस्यैव सर्वेषां प्रत्यगात्मनां प्रयोजककर्तृत्वं पुण्यापुण्यकर्मफलदातृत्वञ्च प्रदर्शयन्नाह ।

परमात्मा तु सर्वेषां क्षेत्रज्ञानां प्रयोजकः ।
तथा फलप्रदाता च कर्मणोःपुण्यपापयोः ।७२।
कारयति शुभं कर्म तमूर्द्ध्वं यं निनीषते ।
अस्माल्लोकादधो यं च नेतुमिच्छति तं जनम् ।७४।
कारयत्यशुभं कर्म परमात्मा हरिः स्वयम् ।
श्रुत्यर्थोऽयं समादिष्टो नियन्तृत्वे प्रमाणकः । ७५ ।

कर्त्ता तथापि तैस्तेषां गुणदोषैर्न लिप्यते।
असङ्गतत्वादीश्वरत्वात्स्वातन्त्र्यात् सर्ववस्तुषु । ७६ ।
कारयितृत्वमीशस्य कर्मणोः पुण्यपापयोः ।
कर्मसापेक्षमित्युक्तं सूत्रकारेण वै यतः । ७७ ।
अतो वैषम्यनैर्घृण्यस्पर्शो ब्रह्मणि नास्ति हि ।
अनादिकर्मनिष्ठत्वाद्वैषम्यस्याखिलात्मनाम् । ७८ ।

तुः पुनरर्थे। परमात्मा सर्वेषामन्तरात्मा सर्वनियन्ता पुरुषोत्तमः सर्वेषां प्रत्यगात्मनां प्रयोजककर्त्ता पुण्यपापकर्मणोः फलप्रदाता चेति योजना ॥७३॥ "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधोनिनीषते" इतिश्रुतेरर्थं दर्शयन्नाह-कारयतीति। साध्वसाधुकर्मकारयितृत्वेन सर्वनियन्तृत्वं परमात्मन उपपन्नम् ।७४। यदि परब्रह्मणः प्रयोजककर्तृत्वमभ्युपेयते तदा पुण्यापुण्ययोगस्यापि तत् प्रसज्येत, इत्यत आह—कर्त्रेति । तेषाम् = शुभाशुभकर्मणाम् । परमात्मनो गुणदोषास्पृश्यत्वे हेतुत्रयमुपन्यस्यति-असङ्गतत्वादिति । असंगोह्ययं पुरुष इतिश्रुतेः । ईश्वरत्वात् = कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात्। स्वतन्त्रत्वात्, "आत्मा हि परमः स्वतन्त्रोऽधिगुण इतिश्रुतेः । "य आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" । "कर्मक्लेशविपाकाद्यैरस्पृष्टस्याखिलेशितुः । ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः परः पराणां सकला न यत्र क्लेशादयःसन्ति परावरेशे" इतिपराशरोक्तिश्च । नन्वीश्वरस्यैव पुण्यापुण्यकर्मणां प्रयोजककर्तृत्वाभ्युपगमे वैषम्यनैर्घृण्यप्रसक्तिः स्यादित्यत आह—कारयितृत्वमिति। वैषम्यनैर्घृण्येन सापेक्षत्वादिति। कर्मसापेक्षत्वात् पुण्यापुण्यप्रयोजकस्य नियन्तुर्न वैषम्यादिशङ्काबकाशः । ७७ । व्रीह्याम्रकण्टकादीनां विषमाणामप्युत्पत्तौ पर्जन्य-

स्यासाधारणहेतुत्वेऽपि वैषम्यस्य तत्तद्बीजवृत्तित्वेन न पर्जन्ये तत्प्रसक्तिः- एवमेव पुण्यापुण्यसुखदुःखादीनां विषमाणामपि साधने परमात्मनोऽसाधारणत्वेऽपि वैषम्यस्य तत्तद्बीजात्मकानादि कर्मनिष्ठत्वेन परमेश्वरे भगवति न वैषम्यादिप्रसंग इत्याह–अतो वैषम्येति । यतः सूत्रकारेण कर्मसापेक्षत्वं पुण्यपापादिप्रयोजकस्य नियन्तुरभिहितम् । अतो ब्रह्मणिवैषम्यनैर्घृण्ययोर्न प्रसक्तिः। हिर्हेतौ । प्रत्यगात्मनां यान्यनादिकर्माणि सन्ति तद्वृत्तित्वाद्वैषम्यस्यातो न सर्वेश्वरे परब्रह्मणि वैषम्यादिप्रसक्तिरित्यर्थः ।।७८

इति प्रत्यगात्मनामीश्वराधीनत्वसमर्थनम् ।

प्रत्यगात्मनोऽणुपरिमाणत्वं प्रागभिहितं, तच्छ्रुतिप्रमाणसिद्धमित्याह ।

अणुत्वपरिमाणं यत् कथितं प्रत्यगात्मनाम् ।
श्रुत्युक्तमेव तत्तस्माद्वैदिकैरुररीकृतम् ॥ ७९ ॥
स्वरूपेणाणुमानोऽपि विभुर्ज्ञानेन सर्वतः ।
देहं व्याप्नोति हि तथा दुःखादेश्चानुभावुकः ॥ ८० ॥
एकत्रैव च संस्थोऽपि प्रकाशयति दीपवत् ।
अणुर्वेत्यादिवाक्यश्च श्रौतं स्पष्टं हि विद्यते ॥ ८१ ॥

श्रुत्युक्तमिति । "अणुर्ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश, अणुर्ह्येष आत्मा यं वा एते सनीतःपुण्यपापम्" इति श्रुतिप्रमाणनिर्धारितं यत् प्रत्यगात्मनामणुपरिमाणकत्वम् । तस्माद्वैदिकसम्प्रदायानुयायिभिःप्रत्यगात्मनामणुपरिमाणत्वं स्वीकृतम्७९ नन्वात्मनोऽणुपरिमाणत्वे सर्वशरीरावयवगतदुःखानुसन्धातृत्वं प्रकाशकत्वं सर्वशरीराधारत्वं च न स्यात्, तस्य मेरुगिरौ सर्षपस्येव देहातिसूक्ष्मतमाल्पतरैकदेशे स्थितत्वादित्यत आह—स्वरूपे-

णेति। धर्मिभूतस्यात्मनोऽणुत्वेऽपि तद्धर्मभूतज्ञानस्य विभुत्वेन सर्व-सामञ्जस्यं स्यादित्यर्थः। गुणाद्वाऽऽलोकवत् (ब्र० सू० २।३।२६।) इति न्यायात्। प्रत्यगात्मा हृदि स्थितोऽपि स्वगुणेन ज्ञानेन सकलदेहं व्याप्नोति। यथा मणिःद्युमणिर्वा एकदेशवर्तिभिः स्वालोकैरनेकदेशं व्याप्नोति। यथैकदेशस्थोऽपि दीपः स्वप्रभया गृहं प्रकाशयति। एवमेव प्रत्यगात्मा देहं प्रकाशयति, तदुक्तम्—अणुगीतायाम् "यथा दीपः स्वशरणे दीप्यमानः प्रकाशते। एवमेव शरीराणि प्रकाशयति चेतन" इति। अणुर्वेत्यादिवाक्यञ्चेति। "अणुर्ह्येष आत्मा चेतसा वेदितव्यः" इतिवचनेन जीवानामणुपरिमाणत्वं सिद्धयति ॥ ८१ ॥

उत्क्रान्तिगत्यागतीनाम्। (ब्र० सू० २।३।२०।) स्वात्मनाचोत्तरयोः। (ब्र० सू० २।३।२१।) नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्। (ब्र० सू० २।३।२२।) स्वशब्दोन्मानाभ्याञ्च। (ब्र० सू० २।३।२३।) इत्यादिसूत्रैर्विभुत्वं निरस्य जीवानामणुत्व भगवत्पादैर्व्यवस्थापित-मित्याह—

**विभुवादनिरासेन व्यासेनापि प्रकीर्तितम् ॥**
**नात्माणुपरिमाणोऽस्तिविभुत्वश्रवणाच्छ्रु तेः ॥८२॥**
**इतिचेन्नेति वक्तव्यं सा श्रुतिर्ब्रह्मगोचरा ॥**
**इति शारीरके स्पष्टं द्वितीयाध्याय ईरितम् ॥८३॥**
**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥८४॥**

विभुवादेति। यदि जीवानां विभुपरिमाणकत्वमिष्यते तदोत्क्रान्तिगत्यागतिभिश्चलनमेव न घटेत। तथात्वे, उत्क्रान्त्यादिबोधकश्रुतयो व्याकुप्येरन्नित्यत अणुपरिमाणत्वं प्रत्यगात्मनामभिहितम् एतदुक्तंभवति।

योऽयं विज्ञानमयः प्राणेष्विति प्राणसम्बन्धिनं जीवात्मानं प्रस्तुत्य स वा एष महानज आत्मेति महत्त्वाम्नानान्नाणुरिति चेन्न, इतराधिकारात्। "यस्यानुवित्तः प्रतिबुद्ध आत्मेति" मध्ये परमात्मप्रतिपादनानन्तरस्यैव परामर्श इति ॥ ८३ ॥ यथेति। यथैकः परिच्छिन्नश्चादित्यः स्वप्रभया कृत्स्नमिमं लोकं प्रकाशयति तथा क्षेत्रज्ञः, अणुपरिमाणकोऽपि स्वधर्मभूतज्ञानेन कृत्स्नमापादतलमस्तकं क्षेत्रं प्रकाशयति ॥ ८४ ॥

इत्युक्तं वासुदेवेन गीताशास्त्रे स्वसम्मतम्।
सदृष्टान्तमतो विज्ञैरेतदेव हि चिन्त्यताम् ॥८५॥
विभुवादे तु बहवो दोषाः शास्त्रे प्रकीर्तिताः।
अनुत्क्रान्त्यादि सर्वान्त ज्ञातृत्वादिप्रसङ्गतः ॥८६॥
मध्यमे परिमाणे तु देहवन्नश्वरो भवेत्।
तस्मादेतन्मतं ज्ञेयं वाह्यानामेव सम्मतम् ॥८७॥

इति प्रत्यगात्मनामणुत्वपरिमाणनिर्धारणम्। हि यतः श्रीमद्भगवद्गीतायां भगवता श्रीपुरुषोत्तमेन स्वाभिमतं दृष्टान्तसहितं जीवानामणुपरिमाणत्वमभिहितम्, अतः सारासारविवेचकैर्विद्वद्भिः प्रत्यगात्मनामणपरिमाणत्वं मन्तव्यम्। एतदेव = अणुपरिमाणत्वम् ॥ ८५ ॥ येतु प्रत्यगात्मनां विभुत्वं मन्यन्ते तेषां मते प्रत्यगात्मनामेकत्वं वहुत्वं वेति विवेचनीयम्। नाद्यः पक्षःसाधीयान्। तत्र मनसोऽणुत्वे विभुत्वे वा सर्वेषामपि विभूनां प्रत्यगात्मानां सर्वमूर्तसंयोगवत्त्वात्सर्वैर्मनोभिः सह नित्यसंयुक्ततया सर्वेषां सर्वान्तरवृत्तिज्ञातृत्त्वापत्तेः अतएव ब्रह्मण्यतिप्रसङ्गाच्च अहं त्वमयमिति प्रत्ययानां विनिगमनाविरहेण विभागाभावापत्तेश्च। न द्वितीयः। तत्राप्येकस्य विभोरात्मनः सर्वान्तःकरणरूपोपाधिभिरवच्छिन्नत्वात् सर्वेषामुपहितानां सर्वज्ञातृत्वं

समानम् । प्रत्यगात्मनां विभुपरिमाणत्वमिष्यते । तदोत्क्रान्तिगत्यागतयः-जीवानां श्रुतिभिः प्रतिपाद्यमानाः नोपपद्येरन्नित्याशयेनाह-विभुत्वादेरिति ॥ ८६ ॥यदि जीवानां मध्यमपरिमाणत्वमभ्युपेयते तदा घटादिवन्नश्वरत्वं प्रत्यगात्मनां प्रसज्येत, इत्याह—मध्यम इति । जीवात्मनां मध्यमपरिमाणत्वमिति पक्षो वेदबाह्यानामेव नतु वैदिकानाम् ॥८७॥

प्रत्यगात्मनां पुरुषोत्तमाधीनत्वं निर्णीय सम्प्रति शारीराणां प्रतिदेहभिन्नत्वं निर्वक्ति—

**भिन्नत्वमपि जीवानां प्रतिदेहं प्रसाधितम् ॥**
**ब्रह्मादिस्थावरान्तेषु शरीरेष्वण्डजादिषु ॥ ८८ ॥**

**चतुर्विधेषु भिन्ना हि जीवाः सर्वे स्वरूपतः ॥**
**ईश्वरस्त्वेक एवास्ति सर्वेष्वात्मस्वनात्मसु । ८९ ॥**
**ईश्वरस्य च जीवानां तेषाञ्चापि परस्परम् ॥**
**वैलक्षण्यं च संसिद्धं शास्त्रेषु श्रुतिनिश्चितम् ॥ ९० ॥**

जीवानां प्रतिदेहभिन्नत्वं शास्त्रेण समर्थितम् । ब्रह्मादिस्थावरान्तेषु चतुर्विधेष्वपि देहेषु स्वरूपेण भिन्नमिति यावत् । शरीरं चतुर्विधम् । अण्डजं स्वेदजं जरायुजमुद्भिज्जञ्चेति । एतेषु चतुर्विधशरीरेषु वर्त्तमाना जीवाःस्वरूपतो भिन्ना इत्यर्थः । अनेन परमात्मनो जीवानाञ्च महद्वैलक्षण्यमभिहितम् । परमेश्वरस्य सर्वत्रैकत्वादित्याह—ईश्वरस्त्वेक इति । तेषाम् = जीवानाम् । सुखदुःखादिभेदेन जीवानां परस्परभेदसिद्ध्या एकजीववादिपक्षो निरस्तः । अन्यथा एकस्मिन्नपि सुप्ते मूर्छिते मृते वा निखिलस्याप्यप्रतीत्यापत्तेः एतेनैव सुखदुःखादिगुणसाङ्कर्य्यशङ्कापि दूरतो निरस्ता भवति । ८८।८९।९० ॥

उक्तार्थं श्रुतिसूत्रस्मृतिप्रमाणेन निर्धारयति-

नानात्वव्यपदेशो हि सर्वशास्त्रेषु विद्यते ॥
चेतनश्चेतनानामित्यादिश्रुत्या प्रकीर्त्यते ॥ ६१ ॥
अंशो नानेतिसूत्रेण चान्यैरप्युपपद्यते ॥
न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ॥ ६२ ॥
वहवो ज्ञानतपसा पूता मद्भावमागताः ॥
इत्युक्तं श्रीमुखेनैव कृष्णेन परमात्मना ॥ ६३ ॥

"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, य आत्मनि तिष्ठन्-आत्मानमन्तरो यमयति, एष ते आत्मा अन्तर्याम्यमृतः, नित्यो नित्यानां चेतनश्चेतनानामेको वहूनां यो विदधाति कामान् , धियोयोनः प्रचोदयात्" इत्यादिश्रुतिभ्यःप्रत्यगात्मनां नानात्वं निर्धारितम् । जनानां चेतनानामिति वहुवचननिर्देशेन जीवानां बहुत्वमभिहितम् ॥६१॥ पूज्य-पादश्रीवादरायणेनापि प्रत्यगात्मनां नानात्वं भाषितमित्याह-अंश इति ।

अंशो नानाव्यपदेशादन्यथापि दाशकितवादित्वमधीयतएव (ब्र० सू० २।३।४२) स्वामिभृत्यपुत्रभ्रातृसखिवदत्यन्तभिन्न एवांशोऽयमिति कुतः-नानात्वव्यपदेशात् ,"द्वासुपर्णा सयुजा सखाया,ज्ञाज्ञौ द्वावजावीशानीशौ पृथगात्मानं प्रेरितारञ्च मत्वा अनीशश्चात्मा वध्यतेभोक्तृभावात् अनी-शया शोचति मुह्यमानः" इत्यादिश्रुतिभ्यः। उक्ताभिः श्रुतिभिः जीवात्मनां नानात्वं सिद्धयति । अन्यैःसूत्रैरपि जीवानां नानात्वमिष्यते । तथाच सूत्राणि—शारीरश्चोभयेऽपि भेदेनैनमधीयते (ब्र० सू० २।३।४२) भेदव्यपदेशाच्चान्यः (ब्र० स० १।१।२२) अधिकन्तु भेदनिर्देशात् (ब्र० सू० २।१।२२) एतैः सूत्रैः जीवपरमात्मनोर्भेदो निर्धारितः । श्रीमुखवच-नेनाप्युक्तार्थं द्रढयति—नत्वेवाहमिति । तत्रात्मत्वेन स्वस्य जीवात्म-

साम्यापत्तिं तु शब्देन निराकरोति। सर्वात्मनां मध्ये यथा अहं सर्वेश्वर इतः पूर्वस्मिन् काले जातु कदाचिन्नासं नाभवमिति न,अपित्वा-समेव। तथा त्वं नासीरिति न, किन्त्वासीरेव। तथेमे जनाधिपा नास-न्निति न, किन्त्वासन्नेव। एतेनात्मनां भूतकाले सत्त्वादुत्पत्तिर्निराकृता। अत्र प्रत्यगात्मनां नानात्वं नित्यत्वञ्चोक्तं भवति। बहव इति बहुवच-ननिर्देशेन प्रत्यगात्मनां नानात्वमभिहितम्। एतेनैकजीववादो निरस्तः।

जीवैकत्वे तु सर्वेषां साङ्कर्य्यं स्यात्स्वभावतः॥
एकः सुप्तो मृतोवापि मूर्छितः स्खलितोऽपि वा॥६४॥
सर्वे तत्साम्यतामीयुर्यस्मादेको हि चेतनः॥
महदसम्भवं ह्येतद्यतः क्वापि न दृश्यते॥ ६५॥
तस्माज्जीवैकवादोऽयं दूरात् त्याज्यो हि वैदिकैः॥
यद्येकत्ववचोऽपि स्याज्जीवात्मविषयं क्वचित्॥ ६६॥
तत्तु जीवत्वसामान्याभिप्रायेण प्रकीर्त्तितम्॥
एतदेव समादिष्टमाचार्य्यैस्तत्त्ववेतृभिः॥ ६७॥
असङ्ख्याताः यतः सर्वे ह्यनन्तत्वेन कीर्तिताः॥
अनन्तत्वेऽपि पूर्वोक्तश्रुत्यादिश्चेह वुध्यताम्॥६८॥

यदि प्रत्यगात्मनामेकत्वमभ्युपेयते तदा सुखदुःखयोःसाङ्कर्य्यं स्यादित्याह—जीवैकत्व इति। साङ्कर्यमेव व्याचष्टे—एक इति। चैत्रे भुक्ते मैत्रस्यापि तृप्तिस्स्यात्, चैत्रस्य दुःखनिवृत्तौ मैत्रस्यापि तत्प्रसङ्ग इत्यर्थः। यदि कुत्रापि जीवमित्येकवचनं दृश्यते तज्जात्यभिप्रायेणोक्तम् तत्रैकत्वस्य जीवत्वजातावन्वय इत्याह—यद्येकत्व इति। जीवानां नाना-त्वेप्येकैकस्य जीवस्योक्तसाधनसम्पत्त्या क्रमेण मोक्षाभ्युपगमे कदाचित् सर्वेषामेव मोक्षापत्तौ निःशेषकार्यकारणात्मकविश्वात्यन्ताभावप्रसङ्ग-

इत्याशङ्क्य समाधत्ते । असङ्ख्याताइति । अनन्तत्वञ्चात्र सङ्ख्या-निरूपितावसानशून्यत्वम् । प्रत्यगात्मनामनन्तत्वे प्रागुपदर्शितश्रुतयः प्रमाणत्वेनानुसन्धेयाः । ९४।९५।९६।९७।९८।

ह्येतेनोक्तं हि सामान्यलक्षणं त्रिविधात्मनाम् ॥
अधुना बद्धजीवानां विशेषश्चाभिधीयते ॥ ९९ ॥
देहयोगवियोगार्हा बद्धास्ते परिकीर्तिताः ॥
अनादिविमुखा यै वै ब्रह्मणःपरमात्मनः ॥ १०० ॥
तेऽनाद्यविद्यया बद्धा जीवा वै कर्मसंज्ञया ॥
ज्ञानसङ्कोचमापन्ना घटे दीप इवावृताः ॥ १०१ ॥
देहद्वयस्य सम्बन्धादन्यथाज्ञाननिश्चयाः ॥
पञ्चभूतात्मकेऽशुद्धे देहआत्माभिमानकाः ॥ १०२ ॥
कलत्रापत्यवित्तेषु स्वात्मीयत्त्वाभिमानकाः ॥
शब्दादिर्विषयासक्तास्तदर्थेहाश्च सर्वदा ॥ १०३ ॥
देवतिर्यङ्मनुष्यादिसर्वयोनिषु सम्भवाः ॥
संसारचक्रमध्ये वै भ्रमन्तो निजकर्मणा ॥१०४॥
तेषु मध्ये जनः कश्चिद्दीनस्तथैव पीड़ितः ॥
संसाराब्धितरंगैश्च ताड़ितोऽत्यन्तदुःखितः ॥१०५॥
श्रीमाधवेन कृष्णेन हरिणा क्लेशहारिणा ॥
प्रभुणा यदि दृष्टश्चेदहैतुक्यानुकम्पया ॥ १०६ ॥
स तदा मानुषं जन्म लब्ध्वा श्रेयोऽभिलाषकः ॥
सत्संप्रदायनिष्ठानामाचार्याणां समाश्रयः ॥ १०७ ॥

भूत्वा तन्मुख निर्यात सम्यक्छास्त्रामृतौघतः ॥
संशयान् प्लाव्य स्वान्तःस्थान्हरिध्यानपरायणः ।१०८॥
भगवद्ध्यानपाकेन ध्रुवास्मृत्या ततः परः ॥
श्रीकृष्णानुग्रहं लब्ध्वा साक्षात्कारमवाप्य च ॥१०९॥
साक्षात्कारेण निःशेषकर्मवन्धाद्विमुच्यते ।

अनादिकर्मरूपाविद्यावच्छेदकलक्षणवन्धार्हत्वेसति तन्निवृत्तिपूर्वकभगवद्भावापत्तिलक्षणमोक्षार्हमिति वद्धानां जीवानां लक्षणम् । अनादिकर्मात्मकाविद्यावच्छिन्नो देवतिर्यङ्मानुष्यादिदेहरूपं संसारचक्रमनुभवन्श्रीभगवन्निर्हेतुककृपाकटाक्षावलोकितः, आचार्यदेवो भूत्वा तन्मुखनिर्झरितसच्छास्त्रसुधास्त्रावितसंशयादिरोगो भगवत्स्वरूपादिविषयकध्यानसन्ततिपरिपाकलब्धसाक्षात्कारनिरस्तकर्मबन्धो भगवद्भावापत्तिलक्षणमोक्षभागी भवतीतिसमुदायार्थः । "यमेवैष वृणुते तेन लभ्यः तमक्रतुं पश्यति वीत शोको धातुःप्रसादान्महिमानमीशम्" "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं तदा-विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपेति" इत्याद्या श्रुतय उक्तार्थे प्रमाणत्वेनानुसन्धेयाः । ९९ । १०० । १०१ । १०२ । १०३ । १०४ । १०५ । १०६ । १०७ । १०८ । १०९ ॥

घटात्मके ह्यवच्छेदे ध्वस्ते दीप प्रकाशते ॥
तथा लिङ्गशरीरस्यध्वंसे जीवः प्रकाशते ॥ १११ ॥
भगवद्भावसंप्राप्तिं मुक्तिं प्राप्नोति वैष्णवः ॥
ज्ञानेनापरिच्छिन्नेन ब्रह्मवद्व्यपदिश्यते ॥ ११२ ॥

अनुग्रहोऽपि कृष्णस्य युक्ते भक्त्यादिभिर्जने ॥
जायते त्वन्यथा सर्वे मुच्येयुः साधनैर्विना ॥ ११३ ॥
एवञ्चापि प्रसादस्याप्राधान्यं नैव जायते ॥
वैषम्यादिप्रसङ्गाप्तेर्व्याजमात्रेण साधनम् ॥ ११४ ॥

जीवस्वरूपविषयकज्ञानसङ्कोचलक्षणाज्ञाननिवृत्तौ तज्ज्ञानविकाशो भवत्येव, घटस्थदीपस्य तदात्मकप्रतिबन्धसङ्कुचितप्रभस्य घटात्मकप्रतिबन्धनिवृतौ तत्प्रभाप्रकाशवदित्याह - घटात्मक इति ।१०।११॥ मुक्तेः स्वरूपं निर्वक्ति= भगवद्भावेति। भावः= अपरिच्छिन्नज्ञानानन्दवत्त्वेसत्यप्राकृतप्रकाशानन्दविग्रहवत्त्वम् । तस्य प्राप्तिं मुक्तिं निरस्ता ज्ञानतत्कार्य्यशुभाशुभवासनः विद्वान् प्राप्नोति । भावशब्दार्थं विवृणोति- ज्ञानेनेति । ब्रह्मवदिति । ब्रह्मसादृश्यञ्च स्वरूपेण गुणादिना तथाच ज्ञान स्वरूपत्वात् स्वरूपसादृश्यम्, अपरिच्छिन्नज्ञानधर्मकत्वात् गुणसादृश्यञ्च । तत्त्वं नाम तद्भिन्नत्वेसति सार्वज्ञ्यापहतपाप्मत्वादिभूयो ब्रह्मगत धर्मवत्त्वाल्लक्षणसमन्वयः ॥ ११२ ॥ भगवदनुग्रहस्य व्यापकस्यापि श्रवणादि साधनसम्पन्ने, आचार्य्यदेवभक्तिसंपृक्त एवाविर्भावो नान्यत्रेत्याह— अनुग्रह इति । विपक्षे वाधकतर्कमुपन्यस्यति—अन्यथेति । भगवदनुग्रहस्य विभुत्व इति तदर्थः । यथा तार्किकाणां मते व्यापकस्यापि गोत्वादेः सास्नादिमत्येव सम्बन्धो नान्यत्र । यथोपनिषदानां सिद्धान्ते ब्रह्मस्वरूपस्य विश्वात्मनः "अन्तर्वहिश्च तत्सर्वं व्याप्य नारायणःस्थित" इतिवचनात्सर्वव्याप्त्यापि क्वचिदेव तदधिकारिविशेषे, आसन्नमोक्षके तत्साक्षात्कारो नान्यत्र तद्वदितिभावः ॥ ११३ ॥ भगवदनुग्रहस्यान्योपायसापेक्षत्वेऽप्रधानत्वं तन्निरपेक्षत्वे सर्वमोक्षप्रसङ्ग इति शङ्कां निराकुर्वन्नाह—एवञ्चेति । भगवदनुग्रहस्य निरपेक्षत्वेऽपि नैर्घृण्यादिदोषनिवृत्तये उपायान्तरप्रतिपादकशास्त्रवाधानिवृत्तये च साधनान्तरस्य व्याजमात्रत्वाभ्युपगमान्नोक्तदोषावकाश इत्यर्थः ॥११४ ॥

अप्यङ्गीकृतमाचार्य्यै रेवं दोषा निराकृताः ॥
व्याजमात्रं हि यद्वस्तु तन्नस्वातन्त्र्य वोधकम् ॥११५॥
अनादिकर्मणा वन्धो मुक्तिः कृष्णानुकम्पया ॥
वन्धमोक्षार्हता चैवं तत्त्वविद्भिर्निरूपिता ॥११६॥
पराभिध्यानादित्यादिसूत्रेण व्यासनिर्णयात् ॥
तन्मूला हि श्रुतिश्चात्र प्रमाणत्वेन बुध्यताम् ॥११७॥

श्रीपुरुषोत्तमस्य रमाकान्तस्यातिशयसाम्यशून्यस्य भगवतः स्वतन्त्र एव प्रसादो निरङ्कुशत्वात्। तथापि साधनान्तरप्रतिपादकशास्त्रस्यापि स्वसत्यप्रतिज्ञात्वापादकत्वाद्वाधा मा भूत्। तस्मिन् वाधिते सति स्वस्य प्रतिज्ञाहानिप्रसंगेनानिष्टत्वात्। इतरथा रामोद्विर्नाभिभाषते इत्यादिशास्त्रवाधात् साधनान्तरस्यापि व्याजीक्रियते। अपिच सर्वथा निर्व्याजत्वाभ्युपगमे नैघृण्यादिप्रसङ्गः स्यात्। नहि व्याजमात्रस्य वस्तुनः स्वातन्त्र्यहानिकारिकत्वे शक्तिः। तथात्वे न कश्चिद्दोष इत्यभिप्रायेणाह—अप्यङ्गीकृतमिति।११५। अनादीति। मायाया अनाद्यनन्तत्वेपि तत्तत् क्षेत्रज्ञविशेषकर्मनिमित्तकवन्धमोक्षयोरीश्वरस्यैव प्रदातृत्वेन नियामकत्वान्न माया भावाभावयोः। "संसारवन्धस्थितिमोक्षहेतुरिति" श्रुतेः। "वन्धको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः॥ दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादिस्मृतेश्च॥ ११६॥ उक्तार्थं श्रीव्यासाचार्य्यसम्मत्या द्रढ़यति—परेति। पराभिध्यानात्तु तिरोहितं ततो ह्यस्य वन्धविपर्य्ययोः ब्र० सू० ३।२.५। तु शब्दः शङ्कोद्बोधकः पराभिध्यानात्—अनादितत्कर्मानुगुणपरमेश्वरसङ्कल्पादेव तिरोहितमिति ब्रूमः। ततस्तत्सङ्कल्पादेव ह्यस्य वन्धमोक्षौ श्रूयेते। श्रुतिश्चात्रेति। संसारवन्धस्थितिमोक्षहेतुरिति श्रुतिरुक्तार्थेमानम्॥ ११७॥

अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ॥११८॥

विष्णोः शक्तिः त्रिविधा अपरापराऽविद्याभेदात्। अपरा जड़ा-प्रकृतिरूपा। पराक्षेत्राख्या। कर्मसंज्ञा तृतीया। अनादि कर्माख्या विद्यापर्यायं विष्णोःशक्त्यन्तरमाह—अविद्येति। तत्स्वरूपमाह--यथेति यया = अविद्यया वेष्टिता क्षेत्रज्ञशक्तिः। सर्वगा = कर्मनिमित्तसर्व-शरीरगा॥ ११८॥

संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥
इत्थं विष्णुपुराणेऽपि जनको जनकं प्रति ॥११९॥
स्पष्टं प्राहेति विज्ञेयं प्रमाणं जीवबन्धने ॥
मोक्षकत्वं हरेरेव शास्त्रेणैवेति निश्चयात् ॥१२०॥
यमेवेषेति विज्ञेया श्रुति रन्याश्च सज्जनैः ॥
बन्धको भवपाशेन भवपाशाच्च मोचकः ॥१२१॥
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥१२२॥
मामेव ये प्रपद्यन्ते माया मेतां तरन्ति ते ॥
इत्यान्यान्यपि वाक्यानि प्रोक्ताथ सन्त्यनेकशः ॥१२३॥

श्रोतृवक्तृवैशिष्ट्येनोक्तार्थस्य वैशिष्ट्यमाह—संसारेति। अनादि कर्माख्यविद्यया विशिष्टतः क्षेत्रज्ञः, प्रतिक्षणमनवरतान् संसारतापान् प्राप्नोतीत्यर्थः। विष्णुपुराणे षष्टेंऽशेसप्तमेऽध्याये—जनकाय पुरा योगं तमहं कथियामिते। धर्मध्वजो वैजनकस्तस्य पुत्रोऽमित-ध्वजः। इत्युपक्रम्य ततः खाण्डिक्यजनकोऽभवदिति वचनमुक्तम्।

खाण्डिक्यजनकस्योक्तिरियं केशिध्वजजनकं प्रतीत्याशयेन जन-कोजनकं प्रतीत्युक्तम् । ११६ ॥ १२० ॥ श्रीविष्णोरेव मोक्ष-प्रदत्वममुमर्थं प्रमाणेन दृढ़यति । यमेवैषेति । " यमेष वृणुते तेन लभ्यैष आत्मा वृणुते तनुं स्वामिति" श्रुतिः। अस्यार्थः यमुपास-कमेष परमात्मा वृणुते आत्मसात्करोति तेनात्मीयेन तत्प्रियतमेन लभ्यः तस्य प्रियतमस्योपासकस्यैष आत्मा स्वां तनुं मूर्तिं विवृणुते प्रकाशयति प्रत्यक्षीभवति। अन्यानि स्मृतिवचनान्युदाहरति । वन्धक इति । श्रीमुख-वचनेनाप्युक्तार्थं दृढयति—दैवीह्येषेति । "गौरनाद्यन्तवती जनित्री भूत-भाविनी सितासिता च रक्ता चे" त्यादिश्रुतेर्मायागुणप्रवाहस्यानाद्यन्तत्वा-भिधानात्तन्मोहितानां जीवानामस्वातन्त्र्येण तत्परिहर्त्तुमशक्यत्वान्न कदापि कस्यापि मायातिक्रमः स्यादित्यासाधारणं मायातरणोपायमाह— दैवीति देवस्य द्योतमानस्य सर्वनियन्तुर्भगवतो नियम्यभूता दैवी एषा त्रिगुणमयकार्यद्वारा सर्वप्रत्यक्षा गुणमयी सत्त्वरजस्तमोगुणमया-त्मिका मम परमेश्वरस्य सर्वज्ञस्य सर्वशक्तेः सर्वकार्योत्पादनमाया शब्दवाच्या। दुरत्यया = ममानुग्रहमन्तरेणोपायसहस्रैरपि दुस्तरा। हि निश्चितमेव अनन्ता एव जीवास्तेषां मध्ये ये केचन मामेव सर्वेश्वरं सर्वज्ञं सर्वशक्तिं मायानियन्तारं प्रपद्यन्ते स्वपुरुषार्थाभिमानं साधनान्तरं च विहाय साधनसाध्यरूपं निश्चित्य सर्वात्मना भजन्ते, आनुकूल्यस-ङ्कल्पादिरूपां शरणागतिं मयि कुर्वन्तीत्यर्थः । त एवैतां मम मायां तरन्ति वर्जयन्ति,नत्वन्ये । अवधारणस्योभयत्र सम्बन्धात । "ये प्रपन्नाःहृषीकेशं न ते मुह्यन्ति मानवाः । भये महति मग्नानां त्राता नित्यं जनार्दनः, इति । भीष्मपर्वणि वचनम् । वामने प्रह्लादश्चाह । "ये संश्रिता हरिमनन्तम-नाद्यमाद्यं नारायणं सुरगुरुं शुभदं वरेण्यम् । शुद्धं खगेन्द्रगमनं कमलाल-येशं ते धर्मराजभवनं न विशन्ति धीराः, इतिः । प्रोक्तार्थे इति । श्रीपुरु-षोत्तमस्यैव भवपाशमोचकत्वरूपार्थे अनेकशः वाक्यानि प्रमाणानि सन्तीत्यर्थः । १२१ ॥ १२२ ॥ १२३ ॥

यथा व्यासेन निर्णीतं जीवबन्धाधिकारणम् ॥
तथा व्याख्यातमाचार्य्यैः श्रुतिसूत्रैश्च युक्तिभिः ॥१२४

पराभिध्यानादिति सूत्रेण भगवतःसङ्कल्पाधीनमस्य बन्धनं भवतीति व्यासाचार्यैःनिर्धारितमित्याह-यथेति । यथा = येन प्रकारेण जीवनबन्धादिकारणं पूज्यपादव्यासेन निर्णीतम् तथा = तेन प्रकारेण पूर्वाचार्यैः श्रुतिसूत्रैर्युक्तिभिः व्याख्यातमिति योजना । श्रुतिःसंसारबन्ध-स्थितिमोक्षहेतुरितिश्रुतिः । पराभिध्यानादितिसूत्रम् । दैवीह्येषेति स्मृतिः । यदि श्रीपुरुषोत्तमस्य बन्धनिवर्त्तकत्वं नाभ्युपेयते तदा मायागुण-प्रवाहस्यानाद्यन्तत्वात् कस्यापि पुंसो मोक्षो नोपपद्येतेति युक्तिस्तर्कश्च । एभिः श्रीपुरुषोत्तमस्यैव भवपाशबन्धकत्वं भवपाशमोचकत्वंच सिद्धम् एतावता प्रबन्धेन बद्धजीवानां बन्धमोक्षार्हत्वमभिहितम् । तथाच देहादि-जड़वर्गभिन्नचेतनत्वे सति ज्ञातृत्वकर्तृत्वभोक्तृत्वाहमर्थस्वरूपत्व-प्रतिदेहभिन्नत्वाणुपरिमाणत्वानन्तात्वधर्माश्रयत्वेसति बन्धमोक्षार्ह-त्वेसति भगवदायत्तस्थितिप्रवृत्तिकत्वं त्रिविधानां प्रत्यगात्मनां साधारणं लक्षणं कारिकात्रयेण प्रागभिहितम् । तच्च लक्षणं श्रुतिसूत्रस्मृतिप्रमाणैः शताधिकैकविंशतिसंख्याकाभिः कारिकाभिरेतावता प्रबन्धेन निर्धा-रितम् । अग्रिमग्रन्थेन जीवतत्त्वस्यान्यथात्वमितिव्याचक्षाणानां वादिनां मतस्यापाकरणम् ॥ १२४ ॥

अन्ये, एकमेवाद्वितीयं निष्कलं निष्क्रियं निरञ्जनं देशतः कालतः वस्तुतः परिच्छेदशून्यं शब्दाद्यगोचरं ब्रह्मैवाविद्यासंसर्गाज्जीवः । स च सर्वशरीरेष्वेकोऽनेको वा पुण्यपापेष्वासक्तः स च शमदमादिसाधन-मनुष्ठायाद्वैतज्ञानेन मुच्यत इत्याहुस्तन्मतं दूषयितुमुपन्यस्यति—

यैस्त्वद्वितीयमानन्दं निर्विकारं निरञ्जनम् ।
परिच्छेदविहीनश्चासङ्गं शब्दाद्यगोचरम् । १२५ ॥

ब्रह्मैवाज्ञानसम्बन्धात्स्वरूपावरणेच ।
जीवभावं भजत्येवं पुण्यपापेषु सज्जते । १२६ ॥
साधनानि पुनः कृत्वाऽद्वैतज्ञानेन मुच्यते ।
ऐक्यापन्ने तदा सर्वं द्वैतमात्रं विनश्यति । १२७ ॥
इति यदुच्य ते कैश्चिद्वेदान्तार्थविनाशकैः
तत्तुच्छमिति विज्ञेयं सम्भवाभावतस्तथा ।१२८ ॥
स्वप्रकाशश्च निर्लेपमद्वितीयं निरञ्जनम् ।
अज्ञानेन कथं ब्रह्म परिभूतं तदुच्यताम् ॥ १२९ ॥

अद्वितीयं = सजातीयविजातीयस्वगतभेदरहितम् । निर्विशेषत्वे शून्यता स्यादित्यत्राह-आनन्दमिति । निर्विकारम् = षड्विकाररहितम् । निरञ्जनम् = कर्मसम्बन्धतत्फलरहितम् परिच्छेदविहीनम् = देशतःकालतः वस्तुतः परिच्छेदशून्यम् । असङ्गम् = असङ्गो ह्ययं पुरुष इतिश्रुत्या-ब्रह्मणोऽसङ्गत्ववोधनान्न तत्राज्ञानाश्रयता कारणमन्तरा घटत इतिभावः। शब्दाद्यगोचरम् शब्दानुमानाविषयं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, इतिश्रुतेः अज्ञानसम्बन्धात् स्वस्वरूपस्य ज्ञानानन्दस्वरूपस्यावरणेन च ब्रह्मैव जीवभावं भजते। एवममुना प्रकारेण पुण्यपापेषु सज्जते आसक्तो भवति, पुनः साधनानि कृत्वाऽद्वैतज्ञानेन मुच्यते,जीव-एक इति पक्षे सर्वं द्वैतमात्रं विनश्यति एकस्य जीवस्य मुक्तौ प्रपञ्चमात्रस्य विनाश इत्यर्थः । १२६।१२७ । वेदान्तार्थविनाशकैः कैश्चित् मायावादिभिः, इति यदुच्यते तत्तुच्छमिति विज्ञेयं तत्र हेतुमाह-सम्भवाभावत इति ब्रह्मण्यज्ञानस्य सम्भवाभावं विवृणोति—स्वप्रकाशञ्चेति । स्वयंप्रकाशे मायासम्बन्धरहितेऽद्वितीये निरञ्जने ब्रह्मणि अज्ञानावृतत्वं न कथमपि सम्भवति अज्ञानप्रयोजकाभावेनाज्ञानाश्रयत्वाभावात् । एतच्चोपरिष्टाद्व्यक्तं भविष्यति ।१२८।१२९ ॥

नहि प्रचण्डमार्तण्डमण्डलस्यान्धकाराश्रयत्वं केनाप्यनुन्मत्तेन वक्तुं शक्यमित्याशयेनाह—

आवृतस्तमसा सूर्य्य इत्युक्तिरुपहास्यताम् ।
यथा याति तथा ब्रह्मण्यज्ञानोक्तिर्विवेकिषु ॥ १३० ॥
तुच्छतामपि संयाति मूर्खोक्तिरिव संसदि ।
किञ्च प्रयोजको नास्त्यज्ञानस्य ब्रह्मणीत्यतः ॥१३१॥

सूर्यः तमसा आवृत इत्युक्तिः यथा उपहास्यतां याति तथा विवेकिषु तत्त्वातत्त्ववित्सु स्वयंप्रकाशे ब्रह्मणि अज्ञानोक्तिः, उपहास्यतां याति । संसदि—विद्वत्परिषदि मूर्खोक्तिरिव ब्रह्मण्यज्ञानोक्तिस्तुच्छतामपि याति तुच्छत्वे हेतुं निर्वक्ति किञ्चेति । ब्रह्मणि अज्ञानस्य प्रयोजको नास्ति, इत्यतः । यदि ब्रह्मण्यज्ञानस्य प्रयोजकं स्यात्तदा तस्मिन्नज्ञानं सिद्ध्येत्तदेव नास्तीति भावः ॥ १३० । १३१ ॥

किं प्रयुक्तमज्ञानमज्ञानाध्यासप्रयुक्तं स्वप्रयुक्तं चिन्मात्रप्रयुक्तमन्यप्रयुक्तं वा, नाद्यः । अज्ञानाध्यासस्याध्यासान्तरानपेक्षत्वेऽनध्यस्तत्वापत्त्या सत्यत्वोपपत्तेरित्याह—

अध्यासं नैव शक्नोति वक्तुं कोऽपितु बुद्धिमान् ।
स्वयं नास्ति नच ब्रह्म नेतरोऽपि प्रयोजकः ॥ १३२ ॥
अज्ञानस्य प्रयोक्तृत्वे जड्त्वेन घटादिषु ।
अतिव्याप्तिप्रसङ्गेन दोषाच्चात्माश्रयत्वतः ॥ १३३ ॥

कोपि बुद्धिमान् अध्यासं वक्तुं नैव शक्नोति । अयम्भावः । ब्रह्म यदि सामान्येन ज्ञातं सद् विशेषेणाज्ञातं स्यात्तदाऽधिष्ठानं स्यात्, इदं रजतमित्यत्रेदन्त्वरूपसामान्यधर्मो रजतत्वस्य साधकः शुक्तौ वर्त्तते, शुक्तित्वञ्च विशेषोधर्मस्तस्य बाधक मिति तस्या अधिष्ठानत्वमुपपद्यते नैवं ब्रह्मणि सम्भवति । सामान्यतो ज्ञातत्वे सति विशेषेणाज्ञातत्वं

यदधिष्ठानप्रयोजकमभिहितं तद्विरुद्धयोर्निःसामान्यत्वनिर्विशेषत्वयोः धर्मयोः सत्वादधिष्ठानानुपपत्याऽध्या साऽसम्भवः। अधिष्ठानारोप्यलक्षणप्रमाणसामग्र्याद्यभावेन दृग्दृश्ययोराध्यासिकसम्बन्धानुपपत्त्यादेश्चाध्यासस्यैवासम्भवः। ब्रह्मण्यज्ञानं प्रति, अज्ञानाध्यासः प्रयोजक इत्यपि वक्तुं न शक्यते। अध्यासमात्रस्य, दोषजन्यतया दोषमन्तरा कथमज्ञानाध्यासो दोषोऽपि तन्मतेऽध्यस्त इत्यध्यासान्तरापेक्षणादनवस्थापत्तेः। तस्याध्यासान्तरानपेक्षत्वेत्वऽनध्यस्तत्वापतया सत्यत्त्वापत्तेश्च। अज्ञानस्य प्रयोजकमज्ञानं नास्ति ब्रह्मणोऽप्यज्ञानप्रयोजकत्वं नास्ति। नाप्यन्यप्रयुक्तत्वमप्यज्ञानस्य उभयेतरपदार्थानङ्गीकारात्। अज्ञानान्तरकल्पनायां चक्रकापत्तिः। अज्ञानसिद्धौ प्रयोजकं ज्ञानान्तरं वाच्यमज्ञानान्तरसिद्धौ पुनरज्ञानं निविष्टं तत्सिद्धावज्ञानान्तरं प्रयोजकमित्येवंरीत्या चक्रकापत्तिरित्यर्थः। तस्यापि प्रयोजकान्तरकल्पनेऽनवस्थेति जीवेशयोरेकतरस्य प्रयोजकताकल्पने तयोरध्यासकार्यत्वेन तदानीमभावात्, तयोरेवाभावेन तत्प्रयोजकतायास्तु का गाथेत्यपि द्रष्टव्यम्। ६३। अज्ञानं प्रत्यज्ञानस्य प्रयोजकत्वं निरस्यति—अज्ञानस्येति। यद्यज्ञानं प्रत्यज्ञानस्य प्रयोजकत्वं स्यात्तदा जडत्वाविशेषाद्घटस्यापि तं प्रति प्रयोजकत्वं प्रसज्येत। अज्ञानोत्पत्तावज्ञानस्यापेक्षणादात्माश्रय इत्याह—आत्माश्रयत्वत इति। यदि स्वोत्पत्तौ स्वस्यापेक्षितत्वं स्यात्तदा स्वभिन्नं स्यादिति तर्कमुद्रया तस्य दूषकत्वं वोध्यम्। १३२। १३३॥

अज्ञानस्य ब्रह्मप्रयुक्तत्वमपाकरोति।

**ब्रह्म प्रयुक्तमेव स्याद्बाध्येनैव कदाचन।**
**नित्यत्वाद्ब्रह्मणस्तस्य प्रयोज्यस्यापि नित्यता ॥१३४॥**

अज्ञानं प्रति ब्रह्मणः प्रयोजकत्वं न सम्भवति तव मते तस्य निरीहत्वेन प्रयोजकत्वायोगात्, अन्यथा कार्यकारणयोरभेदादज्ञान-

प्रयोजकस्य चिन्मात्रस्य नित्यत्वात् तन्मात्रप्रयोज्यस्याज्ञानस्यापि नित्यत्वमापद्येत तथासति तन्निवृत्त्यभावेन मोक्षो न स्यादित्याह । ब्रह्मेति । यद्यज्ञानं ब्रह्मप्रयुक्तं स्यात्तदा कदाचिदपि तद्बाधो न स्यात् ब्रह्मणो नित्यत्वेन तत्प्रयोज्याऽज्ञानस्यापि नित्यत्वं स्यात् कार्यकारणयो-रनन्यत्वादित्यर्थः । १३४ ॥

इत्यज्ञानप्रोजकत्वभङ्गः ।

अज्ञानस्य बाधकमस्ति न वा अस्ति चेत् किं तस्य बाधकमिति वक्तव्यमित्याह—

बाधकस्तस्य यद्यस्ति तर्हि तत्प्रतिपाद्यताम् ।
ज्ञानञ्चेदुच्यते तत्तु स्वरूपं वाऽथशास्त्रजम् ॥१३५॥
स्वरूपस्याविरोधित्त्वं तैरेवाङ्गीकृतं खलु ।
विरोधित्त्वेन भाने त्वध्यास एव कथं भवेत् ॥ १३६ ॥

तस्य = अज्ञानस्य बाधको निवर्तको यद्यस्ति तर्हि तत्प्रतिपाद्यतां ज्ञानमात्रादेव मुक्तिश्श्रूयतेऽतो ज्ञानमेव तन्निवर्त्तकं वाच्यमिति सोऽय-मनुयोक्तव्यः किं स्वरूपज्ञानमात्राद ज्ञाननिवृत्तिः, उत शास्त्रजन्यज्ञा-नाद्वेति वक्तव्यं तत्राद्यं निरस्यति -स्वरूपस्येति । स्वरूपस्य शुद्धचिन्मा-त्रस्याज्ञानसाधकत्वेनाज्ञानविरोधित्वानङ्गीकारान्नाद्यः पक्षः साधीयान् । यदि शुद्धचिन्मात्रस्याज्ञानविरोधित्वमिष्यते तदा तस्मिन्नाज्ञानाध्यासो नोपपद्येत । १३५ । १३६ ।

वेदान्तश्रवणजन्यापरोक्षवृत्तिरज्ञाननिवर्त्तकेतिद्वितीयपक्षं प्रति-क्षेप्तुमाह—

द्वितीयमपि नैवस्यादज्ञानस्य हि बाधकम् ।
तस्य च विषयत्वेन शुद्धं बायदिवक्षितम् ॥ १३७ ॥
शुद्धस्य विषयत्वन्तु भवतां नैव सम्मतम् ।

विषयत्वे च मिथ्यात्वप्रसङ्गः स्यादसंशयम् ॥ १३८ ॥
शवलस्य विषयत्वे हि शुद्धाज्ञानन्तु नो गतम् ।
नैवान्यज्ञानतोऽन्यस्याज्ञानं नश्यति वै क्वचित् ॥१३९॥

द्वितीयम् = वेदान्तवाक्यजन्यज्ञानमपि नाज्ञानस्य निवर्त्तकम् ,अज्ञाननिवर्त्तकज्ञानस्य को विषयो विवक्षितः, शुद्धो विशिष्टो वा, नाद्यस्तस्य विषयत्वानङ्गीकारात् , अन्यथा मिथ्यात्वप्रसङ्गो दुर्वारः । शुद्धं मिथ्या ज्ञानविषयत्वात् यदैवं यदैवं तवमते घटादिवदित्यनुमानात् । मायाविशिष्टब्रह्मज्ञानेन तदविषयकाज्ञानस्य निवृत्तावपि शुद्धब्रह्मविषयकाज्ञानस्यानिवृत्तत्वान्मुक्तिर्न स्यात् , नहि घटज्ञानेन पटाज्ञानं नश्यति । १३९ ।

विपक्षे बाधकतर्कमुपन्यस्यति —

अन्यथाऽचेतनज्ञानाच्चिदज्ञानं विनश्यताम् ।
मोक्षोऽपि न भवेच्छुद्धस्यैव ज्ञानमृते ध्रुवम् ॥ १४० ॥
अन्यथा शवलस्यैव प्राप्तिर्मुक्तिर्भवेत्तव ।
अतस्तद्बाधकाभावान्न तद्ब्रह्म प्रयोजकम् ॥ १४१ ॥
स्वतन्त्रः स्वप्रकाशश्च कः कुर्याद् दुःखसाधनम् ।
अन्यदध्यासकार्यं वै मतं जीवादिकं ततः ॥ १४२ ॥

अन्यज्ञानस्यान्याज्ञाननिवर्त्तकत्वं यदि स्यात्तदाऽचेतनज्ञानाच्चिदज्ञानस्य विनाशः स्यात् । शुद्धस्य ज्ञानं विना मोक्षोऽपि न भवेत् , शुद्धज्ञानस्यैव मोक्षं प्रति हेतुत्वात् । यद्युपहितब्रह्मविषयकज्ञानस्य मोक्षजनकत्वमुररीक्रियते, तदा तद्विषयकश्रवणमनननिदिध्यासनजन्यतत्साक्षात्कारे सति तस्यैव मुक्तोपसृप्यत्वं प्रसज्येत, तथासति शुद्धब्रह्माभ्युपगमस्य वैयर्थ्यं स्यादित्याह—अन्यथेति । शुद्धब्रह्मविषयकसाक्षात्कारस्य मोक्षजनकत्वानभ्युपगम इति तदर्थः । तव पक्षे शवलस्यैव

प्राप्तिर्मुक्तिर्भवेत् । अतः = ब्रह्मस्वरूपज्ञानस्य शास्त्रजन्यज्ञानस्य चा-ज्ञाननिवर्तकत्वाभावात् । तद्बाधकेति । अज्ञानबाधकाभावात् । ब्रह्मणोऽ-ज्ञानप्रयोजकत्वं नास्ति । कोऽपि परतन्त्रः पुमान् दुःखसाधनं न करोति, किमुत स्वतन्त्रः स्वयंप्रकाशरूपः परमात्मा दुःखकारणमज्ञानं सृजेदि-ति कैमुत्यन्यायमभिप्रेत्याह—स्वतन्त्र इति । एतावता प्रबन्धेन ब्रह्म-णोऽज्ञानप्रयोजकत्वं नास्तीति द्वितीयपक्षो दूषितः ॥ नेतरोऽपि प्रयोजक इति तृतीयविकल्पं निरस्यति— अन्यदिति । ततःब्रह्मणोऽ-न्यत्=ब्रह्मातिरिक्तं सर्वं जीवादिकमध्यासस्य कार्यं मतं, मायावादि-भिरितिशेषः । १४० । १४१ । १४२ ॥

पूर्वसिद्धस्याज्ञानस्याश्रयः पश्चिमजीवो भवितुं नार्हतीत्याह—

पश्चाद्भावीत्यतो नैव तृतीयोऽप्यत्र सिद्ध्यति ।
नन्वध्यासो ह्यनाद्यस्तीत्यतः शङ्का न विद्यते॥१४३॥
इति चेद् ब्रह्मणोऽनादिबद्धत्वमुररीकृतम् ।
तथात्वे चेतनश्चैकः सम्मतोऽस्ति भवन्मते ॥१४४॥
तस्य त्वनादिबद्धत्वाच्छुद्धो नासीदिति स्थितम् ।
मोक्ष्यते नापि शुद्धस्य द्वितीयस्याभावतः ॥१४५॥

जीवस्याज्ञानोत्तरभावित्वात्तस्याज्ञानं प्रति प्रयोजकत्वं न सिद्ध्यति । तृतीय इति । नेतरोऽपि प्रयोजक इति तृतीयविकल्पोऽपीत्यर्थः । अत्र = अज्ञानप्रयोजकत्वे । अज्ञानस्य प्रयोजकाऽसिद्ध्याऽध्यासाऽसिद्धिरिति शङ्का नास्ति, यतोऽध्यासस्यानादित्वादिति शङ्कते—नन्वध्यास इति । हि हेतौ । यतोऽध्यासोऽनादिरत उक्तशङ्का न विद्यते ॥ १४३ ॥ यद्य-ध्यासस्यानादित्वमभ्युपेयते, तदा ब्रह्मणोऽनादिबद्धत्वं वाच्यं, तथासति भवतां राद्धान्ते चिद्रूप एक एवात्माऽभिमतः स चानादिबद्ध एव तद्भिन्नः

शुद्धःबुद्धस्वरूप आत्मा न सिद्धयेत् ,शुद्धस्यद्वितीयस्याभावान्मोक्षोऽप्यनुपपन्न इत्याशयेनोक्तशङ्कां व्युदस्यति—इतिचेदिति। तथात्वे = अनादिवद्धत्वे भवन्मते = मायावादिमते। तस्य = चेतनस्य। यदि वद्धाच्चेतनाद्द्वितीयो निर्मुक्तश्चेतनोऽभिप्रेतस्स्यात्तदा स चेतनस्य वद्धस्य मोचकः स्यान्नत्वेवं भवद्भिरभ्युपेयत इत्यर्थः। १४४। १४५॥

वेदोऽध्यासकार्योऽस्ति मोचकः स कथंभवेत् ।
अध्यासं कल्पितं ब्रूयादनादिर्न भवेत्तदा ॥ १४६ ॥
कल्पितं यद्भवेत् किञ्चित्तत्साद्यं वहि जायते ।
अज्ञानं ब्रह्मणो भिन्नमभिन्नं वाविवक्षितम् ॥ १४७ ॥
भिन्नत्वे द्वैतसम्प्राप्तिस्तथात्वे तन्मतं गतम् ।
अभिन्नत्वे च तद्रूपं ब्रह्म स्यादपि निश्चितम्॥ १४८ ॥
तथात्वे शुद्धताहानेर्मुक्त प्राप्यंहि नस्थितम् ।
ब्रह्मण्यज्ञानसम्बन्धः शास्त्रे कुत्राप्यशब्दितम् ॥१४९॥

नच वेदस्याध्यासनिवर्तकत्वमितिवाच्यम् । मायावादीनां मते ब्रह्मव्यतिरिक्तस्य सर्वस्याध्यस्तत्वाद्वेदस्याप्यध्यासकार्यतया कथं वेदस्याध्यासनिवर्त्तकत्वमुपपद्यते। यद्यध्यासस्यापि कल्पितत्वमुच्यते तदा तस्यानादित्वमनुपपन्नं प्रत्युत यद्धिकल्पितं तत् साद्येव भवितु मर्हति। तथाचाध्यासस्यानादित्वाभावात्सादित्वं वाच्यं तथासति, अध्यासप्रयोजकसामग्र्यभावान्नाध्यासो सिद्धयतीतिभावः। अज्ञानं ब्रह्मणोऽतिरिच्यतेऽनतिरिच्यते वा। नाद्यः। भेदस्य तात्विकत्वेनाद्वैतव्याघातापत्तेः। नापि द्वितीयः। ब्रह्मणोऽज्ञानस्वरूपत्वे शुद्धत्वं व्याहन्येत तथासति मुक्तोपसृप्यत्वाभावान्मुक्त्यर्थं लोकानां प्रवृत्तिर्दुर्घटास्यादित्याह- अज्ञानमिति। १४६। १४७॥ आद्यपक्षं निरसितुमाह—भिन्नत्व इति। अज्ञानस्य

ब्रह्मभिन्नत्व इत्यर्थः तथात्वे = द्वैतस्य तात्विकत्वे। तन्मतम् = अत्यन्ताभेदवादिनां मतम्— गतभिति। अद्वैतसिद्धान्तोदत्ततिलाञ्जलिस्यादित्यर्थः। द्वितीयविकल्पंनिरस्यति— अभिन्नत्वइति। तद्रूपम्। अज्ञानस्वरूपम्। तथात्वे = ब्रह्मणोऽज्ञानस्वरूपत्वे। ब्रह्मण्यज्ञानसंसर्गे किमपि प्रमाणं नास्तीत्याह—ब्रह्मण्यज्ञानेति। ब्रह्मण्यज्ञानसंसर्गोऽस्तीति कयापि श्रुत्या नोच्यते येन तत्संसर्गस्तस्मिन् सिद्धयेत्। १४८। १४९॥

तस्मात् प्रमाणहीनं वै ब्रह्मण्यज्ञानकल्पनम्।
अहमज्ञो न जानामीत्यादिका प्रत्यया इह॥ १५०॥
प्रमाणंज्ञेयमध्यासइति चेन्नैवमुच्यताम्।
कोऽहं पदार्थइत्येव विविच्य वक्तुमर्हसि॥ १५१॥
शुद्धं ब्रह्म तु नोवाच्यं वाच्ये मिथ्यात्वमाप्नुयात्।
ब्रह्माज्ञं चेतनोऽज्ञश्चेत्युच्येत न तथोच्यते॥१५२॥
जीवोऽपि नहि वक्तव्योऽनङ्गीकाराद्भवन्मते।
अङ्गीकारे तु जीवः स्यादपरश्चेतनः खलु॥ १५३॥

तस्मात् = श्रुतिप्रमाणाभावात्। ब्रह्मण्यज्ञानकल्पने किञ्चिदपि प्रमाणं नास्ति तथाच प्रमाणाभावादप्यज्ञानासिद्धिरित्यर्थः। अहमज्ञो-मां कश्चन न जानाति त्वदुक्तमर्थं न जानामीतिप्रत्यक्षमेवज्ञानसद्भावे प्रमाणमिति शङ्कते—अहमज्ञ इति। इह = अज्ञानसद्भावे। अहमज्ञ इत्यस्य तव द्वैताद्वैतवादिनोमते। ज्ञानाभाववानहमित्यर्थः। अस्मिन्ननुभवे ज्ञानाभावाधिकरणत्वेनाहमर्थस्यात्मनो ज्ञानं विद्यते न वा। तथा तत्रैवानुभवे ज्ञानाभावप्रतियोगित्वेन ज्ञानस्य ज्ञानं विद्यते न वा। आद्ये ज्ञानस्य सत्त्वेन तदानीं ज्ञानाभाव एव नास्तीति दूरे तस्यानुभवः। द्वितीये विद्यमानस्यापि ज्ञानाभावस्यानुभवो न सम्भवति अभावज्ञानं प्रत्यभावाधिकरणज्ञानस्याभावप्रतियोगिज्ञानस्य च कारणत्वात् भावरूपाज्ञानस्य

तु न ज्ञानेन सह विरोध इति शङ्कितुराशयः । १५० ॥

मायावादिनो मते ह्यात्मस्वरूपं यज्ज्ञानं स एवाज्ञानस्य विषयः । अज्ञानाश्रयश्चात्मैव स एव च ज्ञानस्य व्यावर्त्तकः । अहमज्ञ इत्यज्ञान-प्रतीतिकाले तस्य ज्ञानस्वरूपस्यात्मनः प्रतीतिरस्ति न वा । आद्येऽज्ञान व्यावर्त्तकस्यात्मस्वरूपज्ञानस्य सत्त्वेन तदानीमज्ञानस्य नैव स्थितिः सम्भ-वति, आत्मस्वरूपज्ञाननिवर्त्यत्वादज्ञानस्य । द्वितीयेऽज्ञानविषयस्या ज्ञानाश्रयस्य च ज्ञानाभावेनाज्ञानस्य प्रतीतिर्न स्यात् । व्यावर्त्तकस्यैवा-ज्ञानविषयत्वात् । तस्माज्ज्ञानाभाव एवाहमज्ञो मामन्यञ्च न जाना-मीत्यनुभवगोचर इत्यभ्युपगन्तव्यमित्याशयेनोक्तशङ्कां परिहरति—इतिचेन्नेति । अहमज्ञो मामन्यञ्च न जानाति, त्वदुक्तमर्थं न जानामीति प्रतीतौ । को वाऽहमर्थः-शुद्धं ब्रह्म, जीवो वा इति विवेचनीयमित्याह—कोऽहं पदार्थ इति । यदि शुद्धस्य ब्रह्मणोऽहंपदवाच्यत्वं स्यात्तदा तस्य मिथ्यात्वमापद्येत । शुद्धं ब्रह्म मिथ्या अहंपदवाच्यत्वादिति प्रयोगा-दित्याह—शुद्धं ब्रह्मेति । १५१ ॥

नो न वक्तव्यमित्यर्थः, अमानो ना प्रतिषेध इति स्मरणात् । शुद्धस्याहंपदवाच्यत्वे शुद्धं ब्रह्माज्ञमिति प्रतीत्यापत्तेः । १५२ ॥

अपसिद्धान्तापातोक्त्याऽभ्युपगन्तुं न शक्यत इत्याह-ब्रह्माज्ञमिति तथेति । ब्रह्माज्ञमिति कैश्चिदपि वक्तुं न शक्य मित्यर्थः । नापि जीवोऽज्ञा-नाश्रयः, तस्याध्यस्तत्वेनाज्ञानोत्तरभावित्वादित्याह—जीवोऽपीति । भवन्मते = मायावादिनां मते । आश्रयत्वविषयत्वभागिनी निर्वेशेषचि-तिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर-इति तेषामुक्तिः । यदि जीवस्याज्ञानाश्रयत्वमुररीक्रियते, तदा तस्य ब्रह्म-णोऽतिरिक्तत्वं सिद्ध्येदित्याह-अङ्गीकारे त्विति ॥ १५३ ॥

**प्रत्ययश्च यथार्थः स्यात्तस्याज्ञत्वस्य सम्भवात् ।**
**सिद्धं स्वरूपतो द्वैतं तच्चानिष्टं तवैवहि ॥१५४ ॥**

जीवस्याज्ञत्वादहमज्ञ इति प्रत्ययस्य प्रमात्वं प्रसज्येत ब्रह्मणोऽतिरिक्तस्य प्रत्यगात्मनो द्वितीयस्य विद्यमानत्वादद्वैतवादस्य हानिस्स्यादित्याह-प्रत्ययश्चेति । तस्य = जीवस्य । तच्च = स्वरूपतोद्वैतञ्च । तव = अत्यन्ताभेदवादिनः ।। १५४ ।।

**अहङ्कारोऽपि नो वाच्यस्तदर्थत्वेन वै त्वया ।**
**अहङ्कारोज्ञ इत्येव प्रत्ययः स्यात्स नास्ति वै ।।१५५।।**

अहङ्कारोऽपि नोक्तप्रतीतिविषयोऽर्थ इत्याह—अहङ्कार इति । तदर्थत्वेन = अहमर्थत्वेन यद्यहङ्कारस्याहमर्थत्वं स्यात्तदाऽहङ्कारोऽज्ञ इति प्रत्ययः स्यात् स च नास्तीत्यर्थः । सः = प्रत्ययः । वेति निर्धारणे । तस्मादज्ञानशब्दस्य ज्ञानाभावपरत्वेनोक्तप्रत्यक्षस्येतरविषयतया विवक्षितविषयेऽप्रामाण्यादज्ञानासिद्धिरिति भावः।। १५५ ।।

**अज्ञानस्य त्वया तस्मात् स्वप्रकाशे हि ब्रह्मणि ।**
**आरोपश्चापवादश्च वक्तुं नैव हि शक्यते ।।१५६।।**

प्रमाणाभावादज्ञानं न सिद्ध्यति,तदसिद्धौ तदाश्रयत्वमप्यनुपपन्नं, तथाच्याज्ञानाश्रयस्याज्ञातृत्वनियमादेकत्र ज्ञानभावरूपाज्ञानयोस्तमःप्रकाशयोरिव विरुद्धस्वभावत्वान्नाश्रयाश्रयित्वसम्भवो नहि प्रचण्डमार्तण्डमण्डलस्यान्धकाराश्रयत्वं केनाप्यनुन्मत्तेन वक्तुं शक्यम् ॥ स्वप्रकाशे परब्रह्मणि वासुदेवेऽज्ञानमध्यारोपयन्ति ते दिवान्धाः प्राणिन-इत्याशयेनाह—अज्ञानस्येति । तस्मात् = अज्ञानसद्भावे प्रमाणाभावात् त्वया = मायावादिना । अज्ञानस्यारोपोऽपवादश्च स्वयं प्रकाशे ब्रह्मणि वक्तु न शक्य इत्यर्थः । १५६ ॥

इत्यज्ञानविषयकप्रमाणभङ्गः ।

मायावादिनां मते मुक्तिस्वरूपमपि दुर्निरूप्यमसम्भवादित्याह—

ब्रह्मस्वरूपमेवैक्यं मुक्तिरित्थं यदुच्यते।
तन्न स्वरूपनाशस्य प्रसक्तिस्तन्मते यतः ॥१५७॥
नहि स्वरूपनाशो वै मुक्तिःशास्त्रेषु कथ्यते।
स्वरूपेणाभिसम्पत्तिरेव मुक्तिः प्रकीर्तिता ॥१५८॥
तस्माद्भेदः स्वरूपेणाभेदस्साधर्म्यतस्तदा।
सर्वश्रुत्यनुरोधेन वैदिकैरिति निश्चितम् ॥ १५९ ॥

जीवब्रह्मणोरक्यं मुक्तिः। किन्तावदैक्यमध्यस्तमनध्यस्तं वा, नाद्यः। अध्यस्तस्यावश्यं वाध्यत्वेन भेदस्य तात्त्विकतापत्ते न द्वितीयः। ऐक्यप्रतियोगिकभेदस्य पारमार्थिकत्वप्रसङ्गात्। यद्यविद्यानिवृत्ति-र्मोक्षइत्युच्यते, तदा तस्य ब्रह्मस्वरूपं वा तद्भिन्नत्वं वा, नाद्यः। असाध्यत्वप्रसङ्गात्। द्वितीयेऽपि तस्य सत्यत्वमनिर्वाच्यत्वं मृषात्वं वा, नाद्यः। अद्वैतभङ्गात्। न द्वितीयः। ह्यनिर्वाच्यत्वेऽविद्यात-त्कार्ययोरेकतरत्वं स्यात्। न तृतीयः। अविद्यादेः सत्यत्वापत्तेरिति-मुक्ति-स्वरूपं दुर्घटम् अस्तु वा तुष्यतुदुर्जन इतिन्यायेनैक्यंमुक्तिस्तस्य स्वरूपनाश-एव पर्य्यवसाने तस्यैव मुक्तित्वं वाच्यं। नहि स्वस्वरूपनाशार्थं प्रेक्षावतां वेदान्तश्रवणादौप्रवृत्तिरुपपद्यत इत्याशयेनाह—ब्रह्मस्वरूपमेवेति। नके-नापि वेदान्तवचनेन स्वरूपनाशे मुक्तित्वं प्रतिपाद्यते, येन स्वरूपनाशो मुक्तिरिति सिद्ध्येत। कीदृक् मुक्तिः शास्त्रप्रतिपाद्येत्याह—स्वरूपणेति। "एवमेवेष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्या स्वरूपेणाभिसम्पत्तिर्मुक्तिः प्रति-पाद्यते, नतु स्वरूपनाशः। भगवता श्रीवासुदेवेन श्रीमद्भगवद्गीतायां भगवद्भावापत्तिलक्षणमोक्षोऽभिहितः। "मद्भावायोपपद्यते, वहवो ज्ञानतपसा पूता मद्भावमागताः" भावपदञ्च स्वयमेव व्याख्यातं श्रीमु-खेन, इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः॥ इति श्लोकेनेति स

एव सायुज्यब्रह्मामृतमहिमादिशब्दैरभिधीयते । "निरञ्जनः परमं साम्यमुपैति" "नारायणे सायुज्यमाप्नोति" "ब्रह्मैवभवति ।" जुष्टस्त-तस्तेनामृतत्वमेति तन्महिमानं पश्यति वीतशोक इत्यादिश्रुतिभ्यः । निरञ्जनः परमं साम्यमुपैतीत्यत्र परमं साम्यं स्वरूपेण गुणादिना च सादृश्यम्, तथाच प्रत्यगात्मनां ज्ञानस्वरूपत्वात्स्वरूपसादृश्यम्, तद्गतभूयोधर्मवत्त्वम् नियंतृत्वस्वातन्त्र्याभावेन ब्रह्मभिन्नत्वे सति अपरिच्छिन्नज्ञानधर्मकत्वात् गुणसादृश्यञ्च तत्त्वं नाम तद्भिन्नत्वेसति सार्वज्ञ्याद्यपहतपाप्मत्वादिब्रह्मगतधर्मवत्त्वाल्लक्षणसमन्वय इत्याशयेनाह–तस्मादिति । स्वरूपेणाभिसम्पत्तिमुक्तिपदार्थत्वादित्यर्थः । स्वरूपेणेति । ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपेण भेदः, इतरेतरात्यन्तविलक्षणत्वात् । तत्र चेतनस्याणुत्वेन निर्देशार्हत्वमचेतनस्य स्थूलत्वेन ब्रह्मणस्तयोर्वैलक्षण्येनेति विवेक इत्यर्थः । सर्वश्रुत्येति । प्रागुपदर्शितश्रुतिकदम्बेन भगवद्भावापत्तिरूपा मुक्तिः निश्चीयत इत्यर्थः ॥ इतिमुक्तिस्वरूपनिरूपणम् । १५७ । १५८ । १५९ ॥

द्वैतमात्रस्य बाधोऽपि मुक्तौ यत्प्रतिपाद्यते ।
बाधोऽपि दृश्यते नैव लोके शास्त्रे च कुत्रचित् १६०
वामदेवादयो मुक्ता जगन्नैव तु बाधितम् ।
त्वदाचार्याश्च मुक्ता वा नैव मुक्तास्तदुच्यताम् ॥१६१॥
तेषां मुक्तौ त्वदादीनां बाधो नैवेह दृश्यते ।
न मुक्ताश्चेत्कथं तेषामुपदेशात्तवापि हि ॥ १६२ ॥
मुक्तिर्भविष्यतीति त्वं चिन्तयात्मनि चेन्मतिः ।
तस्मादेतन्मतं लोकभ्रमणायैव कल्पितम् ॥१६३॥

यद्यनादिसंसारे कस्यचित्तत्त्वज्ञानं मुक्तिश्चाभूत्तदा ब्रह्मज्ञानेन

प्रपञ्चस्य बाधादिदानीं संसारस्यानुपलब्धिः स्यात्। तथा च तत्त्वज्ञानेन द्वैतमात्रस्य बाधो भवतीति त्वदभिमतं नोपपद्यते,इत्याह–द्वैतमात्रस्येति। यथा शुक्तौ रजतत्वमध्यस्तं,तच्च शुक्तिसाक्षात्कारेण बाध्यते। एवं द्वैतमात्रं ब्रह्मण्यध्यस्तं तदपि ब्रह्मसाक्षात्कारेण बाध्यते, इति मायावाद्यभिमतः पन्थाः, स च न सम्भवदुक्तिकः, श्रुत्यादिसिद्धानां वासुदेववामदेवप्रभृतीनां ब्रह्मज्ञानसत्त्वेऽपि प्रपञ्चस्य बाधादर्शनात्। त्वदभिमताः गौड़पादाचार्य्या मुक्ताः, न वा, मुक्ताश्चेदिदानीं संसारस्यानुपलब्धिस्स्यात्। द्वितीये तेषां मुक्तिर्नाभून्मम तु कथं भविष्यतीति शङ्कया वेदान्तश्रवणादौ प्रवृत्तिर्न स्यात्। तेषां = त्वदुपदेष्टृणां गौड़पादाचार्य्यप्रभृतीनाम्। ( मतिः ) सदसद्विवेकिनीबुद्धिश्चेत् = यदि स्यात्तदा त्वं मम मुक्तिर्भविष्यतीति चिन्तय इत्यर्थः। निगमयति—तस्मादिति। उक्तप्रकाराभावादित्यर्थः। १६०। १६१। १६२। १६३॥

**सदैतिह्यविहीनानामीश्वराद्विमुखात्मनाम्।**
**नैवं सन्मार्गनिष्ठानां वैष्णवाचार्य्यसेविनाम् ॥१६४॥**

सदेति। सत् यथार्थं यदैतिह्यं पुराणमूलकं पारम्पर्य्यप्रसिद्धं, सच्छब्देनायथार्थरूपैतिह्यस्य व्यवच्छेदः। तच्छून्यानाम्, परमेश्वराद्विमुख आत्मान्तःकरणं येषां तथाभूतानां मायावादिनां ब्रह्मातिरिक्तं सर्वं मिथ्या, जीवस्वरूपनाशो मुक्तिः,ब्रह्मण्यज्ञानाश्रयत्वं, ब्रह्मज्ञानेन द्वैतमात्रस्य बाधश्चेत्यभिमतो यो राद्धान्ताभासस्तत्सर्वं लोकानां भ्रान्त्यर्थं कल्पितं, नतु वैष्णवाःश्रीविष्णुदेवताका ये आचार्य्याः सन्मार्गप्रवर्तकाः श्रीनिम्बार्कश्रीरामानुजश्रीमध्वश्रीवल्लभाचार्यास्तेषां सेविनां कल्पितमितिप्राक्तनश्लोकेनान्वयः ॥१६४॥

**प्रकाराश्चेतने ज्ञेया पुनरन्यैर्मुमुक्षुभिः।**
**बद्धा मुक्ताश्च नित्याश्च चेतनास्त्रिविधा मता ॥१६५॥**

वद्धाश्च पूर्वमेवोक्तास्ते भूयो द्विविधा मता ।
एके मुमुक्षवो ज्ञेयाः संसरान्मोक्षमिच्छवः ॥१६६॥

अपरे वुभुक्षवो ज्ञेया विषयान्भोक्तुमिच्छवः ।
तदर्थे कृतयत्नाश्च तेऽपि भूयो द्विधा मताः ॥१६७॥

कदाप्येके तु मोक्ष्यन्ति नित्यसंसारिणोऽपरे ।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥१६८॥

क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
इत्युक्ताः श्रीमुखेनैव नित्यसंसारिणो जनाः ॥१६९॥

संसारे सुखदुःखादीननुभूय पुनस्ततः ।
श्रीकृष्णानुग्रहेणैव विमुक्ताः कर्मवन्धनात् ॥१७०॥

मुक्तास्ते कथिता भूयो द्विधा प्रोक्ता मनीषिभिः ।
निर्गुणत्वेन ये चात्माऽभिन्नं देवमुपासकाः ॥१७१॥

स्वस्वरूपाप्तिसन्तुष्टास्ते ज्ञेयाः प्रथमा इह ।
भगवद्गुणरूपादेरनभिज्ञाश्चते ह्यतः ॥१७२॥

परमानन्दहीना वै संसाररहिता अपि ।
द्वितीयास्तु परं व्रह्म कल्याणगुणसागरम् ॥१७३॥

प्रत्यगात्मनां त्रैविध्यमाह—प्रकाराश्चेति । तेषां मध्ये वद्धानां स्वरूपं प्रागभिहितम् । अधुना वद्धजीवानामितिप्रवन्धेन वद्धानां द्वैविध्यमाह—भूय इति । मुमुक्षुशव्दं व्याचष्टे संसारेति । वुभुक्षुशव्दार्थं विवृणोति—विषयानिति । तदर्थे = विषयार्थे, तेऽपि = वुभुक्षवोऽपि । भाविश्रेयस्का, नित्यसंसारिणश्चेत्याह—कदेति । उक्तार्थं श्रीमुखवचनेन

प्रमाणयति—तानहमिति । मुक्तस्य लक्षणं वक्ति—संसार इति । भगवद्भावापत्तिलक्षणमुक्तिकामा निजस्वरूपापत्तिकामाश्चेति द्वैविध्यं मुक्तानामाह—मुक्ता इति । आद्यस्य स्वरूपं निर्वक्ति—निर्गुणत्वेनेति । यतः = स्वस्वरूपापत्तिमात्रेण सन्तुष्टत्वात् । भगवद्भावापत्तिकामानां स्वरूपमाह-द्वितीयास्त्विति । १६५,१६६,१६७ १६८,१६९.१७०,१७१,१७२ १७३

स्वात्मस्वाम्यादिभावेन भिन्नाभिन्नमुपासकाः ।
लब्ध्वा भक्तिं परां कृष्णे ह्यर्चिरादिकया गताः॥१७४॥
वैकुण्ठाख्यं परं धाम प्राप्य विष्णोः परं पदम् ।
भगवद्भावसम्प्राप्तिं मुक्तिं प्राप्ता ह्यनुत्तमाम् ॥१७५॥
परमानन्दसम्पूर्णाः सन्निधानं गता हरेः ।
ब्रह्मणो गुणरूपादेरनुभवितृरूपकाः ॥१७६॥
भगवदिच्छया सर्वेऽप्यनन्ताः भवितुं क्षमाः ।
'कालत्रयेऽपि' संसारबन्धरहिताश्चये ॥१७७॥
'श्रीमुकन्देच्छया' नित्यं तद्रूपाद्यनुभावकाः ।
तन्नियोगैकसन्तुष्टा' नित्यमुक्ता : प्रकीर्तिताः ॥१७८॥
ते चापि द्विविधा ज्ञेया पार्षदान्तर्यभेदतः ।
शङ्खचक्रकिरीटादिवंशीपीताम्बरादयः ॥१७९॥
आन्तर्याः 'कथिता' विष्वक्सेनादयस्तु पार्षदाः ।
इत्युक्तं चेतनं तत्त्वं समासेनोक्तवर्त्मना ॥१८०॥
मुमुक्षुभिः सदा चिन्त्यं वैष्णवैः साम्प्रदायिकैः ।

इति त्वंपदार्थचेतनतत्त्वनिर्णयः

भिन्नेति। ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपेण भिन्नत्वम् , इतरेतरात्य

न्तविलक्षणत्वात्, तत्र चेतनस्याणुत्वेन निर्देशार्हत्वम्। अचेतनस्य च स्थूलत्वेन ब्रह्मणस्तयोर्वैलक्षण्येनेति विवेकः। एवमेव तस्य तयोश्च सर्वात्मकत्व—सर्वनियन्तृत्व—सर्वव्यापकत्व-स्वतन्त्रसत्त्व-सर्वाधार—त्वादिधर्मेण भिन्नत्वं, ब्रह्मात्मकत्व-तन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रसत्त्व पराधेयत्वादिधर्मेणाभिन्नत्वमित्यर्थः। अर्चिरादिकयेति। विद्वान् देहा-दुत्क्रम्य मूर्द्धन्यनाड्या विनिःसृत्य रश्मीनारुह्य यदा गन्तुमिच्छति तत्रा-र्चिषोऽभिमानिनातिवाहिकेन सम्मुखमेत्य निरतिशयसन्मानेनोपचारैः समभ्यर्च्यातिवाह्य दिनं नीतस्तेनापि पूर्वोक्तरीत्या शुक्लपक्षं नीतः, तत-श्चोक्तरीत्या क्रमात् पक्षोत्तरायणसम्वत्सराभिमानिभिर्वायुं देवलोकरूपं नीतस्तेनापि सन्मानेन समभ्यर्च्य स्वस्मिंश्छिद्रं दत्वा तेन सूर्यमण्डलं भित्वा चन्द्रमसं, तेन विद्युल्लोकं, तदभिमानिदेवताविशेषेण वरुणलोकं तत इन्द्रलोकं ततः प्रजापतिलोकं ततः प्राकृतमण्डलं भित्वा परधाम-सीमानं सरिद्वरां विरजामेति "स आगच्छति विरजां नदीं तां मनसै-वात्येतीतिश्रुतेः"। ततः सूक्ष्मतरं परदेवतायां हित्वा तत्रामानवान् पुरुषान् स्वस्यातिवाहनार्थमागतान् पश्यति, तैः सह सङ्कल्पमात्रेण तां तीर्त्वा विष्णुलोकं प्रविश्य ब्रह्मभावमधिगच्छतीति भावः। मुक्तिर्नाम—अपहत-पाप्मत्वादिसम्पन्नविज्ञानघनीभूतस्वरूपाविर्भावपूर्वकत्वे सति श्रीभग-वत्स्वरूपगुणादिविषयकानवच्छिन्नानुभूत्या स्थितिरित्याह—ब्रह्मण इति। यावदात्मवृत्त्यनवच्छिन्नब्रह्मानुभवितृत्वं ब्रह्मभावपदार्थः। नित्यमुक्तानां-द्वैविध्यमाह—ते चापीति। उपसंहरति—इत्युक्तमिति। समासेन = सङ्क्षे-पेण। इति चेतनतत्त्वनिर्णयः। १७४,१७५,१७६,१७७,१७८,१७९ १८०

अधुनाऽचेतनं तत्त्वं समासेन निरूप्यते।
ज्ञातृत्वाद्याश्रयं नास्ति यद्द्रव्यं तदचेतनम् ॥१८१॥
प्राकृतं कालरूपञ्चाप्राकृतञ्चेति तत्त्रिधा।
तत्रादौ प्राकृतस्यैव स्वरूपाद्यभिधीयते ॥१८२॥

मायाप्रधानमव्यक्तं तम इत्यादिसंज्ञकम् ।
जगद्धेतुरजं नित्यममेयमक्षयं च तत् ॥ १८३ ॥
श्रुत्या स्मृत्या तथाप्रोक्तं त्रिगुणात्मकमेव तत् ।
सत्त्वरजस्तमांसीति गुणास्तस्य प्रकीर्त्तिताः ॥१८४॥

त्वं पदार्थचेतनतत्त्वं निरूप्य सम्प्रत्यचेतनतत्त्वं निरूप्यते, इत्याह--अधुनेति । समासेन = सङ्क्षेपेण । अचेतनत्वं चेतनविजातीयत्वम्, ज्ञातृत्वाद्यनधिकरणत्वेसति द्रव्यत्वम् अचेतनतत्त्वस्य लक्षणम् । अचेतनतत्त्वस्य त्रैविध्यमाह—प्राकृतमिति । तत् अचेतनम् । तत्र तावत् प्राकृतं विविच्यते प्राकृतस्यैवेति । प्राकृततत्त्वं मायादिपदैरभिधीयमानमित्याह—मायेति । ''मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमि''ति-श्रुतौ मायापदप्रयोगः । 'प्रधानक्षेत्रज्ञपतिर्गुणेशः" इतिश्रुतौ प्रकृतिः प्रधानपदेन व्यपदिष्टा । अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमै" इत्यत्राव्यक्तशब्देन प्रधानं निर्दिष्टम् । 'तम आसीत्तमसा गूढमग्रे तमः परे देव एकीभवति'इति श्रुतौ तमशशब्देन तस्या उल्लेखः । प्रधानस्य लक्षणं निर्वक्ति-जगद्धेतुः जगत्कारणम् कुत्रचिन्नित्यमिति व्यपदिश्यते,क्वचिच्चाजत्वमिति,नातः पौनरुक्त्यमाशङ्कनीयम् । अमेयम् = इयत्ताशून्यम् । उक्तार्थंमानेन द्रढयति।श्रुत्येति।श्रुतयःमायान्तुप्रकृतिविद्यान्मायिनन्तुमहेश्वरम् प्रधानक्षेत्रज्ञपतिर्गुणेशः'अव्यक्तात्पुरुषःपरः,इति।अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैःप्रोच्यते प्रकृतिःसूक्ष्मा नित्यं सदसदात्मकम् । अक्षयं नान्यदाधारममेयमजरंध्रुवम् ,हेतुभूतमशेषस्य प्रकृतिः सा परा मुने । दैवी ह्येषा गुणमयी मम माया दुरत्यया इति, स्मृतयश्च । तथाप्रोक्तमिति । उदाहृतश्रुतिस्मृतिभ्यामचेतनतत्त्वस्य मायाप्रधानादिपदवाच्यत्वमभिहितमित्यर्थः । तत् = अचेतनतत्त्वम् । त्रिगुणात्मकमित्युक्तं,के ते गुणा इति जिज्ञासायां तान् गुणान् दर्शयति सत्त्वेति ॥१८१॥१८२॥१८३॥१८४॥

तेषां 'लक्षणं' निर्वक्ति—

ज्ञानादिकारणं सत्त्वं 'लोभादेः' कारणं 'रजः।
प्रमादमोहहेतुश्च तमोगुण उदीरितः॥१८५॥

ज्ञानादिकारणत्वे सति गुणत्वं सत्त्वगुणस्य लक्षणम्। सत्त्वात्सञ्जायते ज्ञानमिति श्रीमुखवचनमनुसन्धेयम्। लोभादिकारणं रजः-रजसो लोभ एव चेवेतिवचनात्। प्रमादादिकारणं गुणविशेषस्तमः॥१८५॥

सत्त्वमेवेतरौ यह्यभिभूयोत्कृष्टतां गतम्।
गीतोक्तसाधनद्वारा 'मोक्षौपयिकमुच्यते' ॥१८६॥

यदा, इतरौ = रजस्तमसी। अभिभूय = उपमर्द्य उत्कृष्टतां गतं सत्त्वगुणं श्रीमद्भगवद्गीतोक्तशमदमादिसाधनकदम्बाचारेण मोक्षौपयिकं, मोक्षस्य साधनमुच्यते, शास्त्रैरितिशेषः ॥१८६॥

रजश्चापि 'तथोत्कृष्टं तत्त्वनिष्ठाविनाशकम्।
जीवानां लोभवृद्ध्येति शास्त्रकारैर्निरूपितम् ॥१८७॥

रजोगुणःसत्त्वतमसी, अभिभूय लोभादिवृद्धया क्षेत्रज्ञानां तत्त्वनिष्ठाविनाशहेतुः ॥१८७॥

तमस्तथैव चोत्कृष्टं स्वात्मनोऽपि परस्य च।
स्वरूपावरणे मुख्यं कारणं मुनिभिः स्मृतम्॥१८८॥

तमोगुणः सत्त्वरजसी,अभिभूयोत्कृष्टःसन् स्वस्य,परस्य = जीवस्य स्वरूपावरणे प्रधानं कारणम्। उक्तार्थे सम्मतिमाह मुनिभिरिति ॥ १८८॥

त्रिगुणाश्रयभूतं तच्चैव द्रव्यं समत्वगम्।
कारणं प्रकृतिः सैव गुणवैषम्यतस्तदा ॥ १८९ ॥

जीवादिष्टानुसारिण्या श्रीपुरुषोत्तमेच्छया ।
विक्षिप्तं गुणवैषम्यं भजते काल आगते ॥ १९० ॥

अचेतनं द्रव्यं गुणत्रयाश्रयभूतं समत्वगम् = साम्यावस्थापन्नम्, गुणानां सङ्कोच इति यावत्। तदा कारणं कारणपदवाच्यं, अनादि-जीवादृष्टानुसारिण्या बहु स्यामिति सङ्कल्पात्मिकया विक्षिप्तं गुण-वैषम्यं प्रवृत्त्युन्मुखत्वं काले = सर्गकाले । आगते = सम्प्राप्ते । भजते ॥ १८९।१९० ॥

इदानीं महदादिक्रमेण व्यक्त्याख्यप्रपञ्चसृष्टिं निर्वक्ति-

कार्योन्मुखगता ह्यादौ महत्तत्त्वं ससर्ज ह ।
तदेवाध्यवसायस्य हेतुर्मुनिभिरुच्यते ॥ १९१ ॥
सात्त्विको राजसश्चैव तामसश्चेति स त्रिधा ।
अहङ्कारस्ततोजातस्त्रिविधो गुणभेदतः ॥ १९२ ॥

सर्वेश्वरेच्छाधीना प्रकृतिर्गुणवैषम्यात् कार्योन्मुखं प्राप्ता महत्तत्त्वं व्यञ्जयति। तदेवाध्यवसायस्य कारणम्। तत्त्रिविधं, सात्विकादिभेदात्। महत्तत्त्वात्त्रिविधोऽयमहङ्कारो गुणभेदेनाजायत। १९१॥१९२॥

देहादावात्मबुद्धेर्वै प्रधानं कारणं हि सः ।
आद्यो वैकारिको ज्ञेयो राजसस्तैजसः स्मृतः ॥१९३॥

स चाहङ्कारो प्रत्यगात्मनां देहादावात्मबुद्धेर्मुख्यं कारणम्। तस्य त्रैविध्यमाह। आद्य इति। वैकारिकः = सात्त्विकः। वैकारिकपदेना-विकाररूपस्य परमसत्त्वस्य व्यावृत्तिः। "कामं देवाश्च मुनयः सत्त्वस्था नृपसत्तम। हीनाःसत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः" इति-मोक्षधर्मोक्तेः। यस्तैजसोऽहङ्कारःस राजसशब्दवाच्य इत्यर्थः॥ १९३॥

भूतादिस्तामसः प्रोक्तस्तत्तत्कार्यमथोच्यते ।
देवता इन्द्रियाणाञ्चाधिष्ठात्र्यो मनसा सह ॥१६४॥
वैकारिकाद्धि सम्भूता वृत्तिस्थानप्रभेदतः ।
तदेव च मनोबुद्धिचित्ताऽहङ्कारभेदतः ॥ १६५ ॥
अन्तःकरणमित्युक्तं तत्त्वविद्भिश्चतुष्टयम् ।
मन एव हि बन्धस्य मोक्षस्यापि च कारणम् ॥१६६॥

तृतीयमहङ्कारमाह भूतादिरिति । तत्कार्यम् = सात्त्विकाहङ्कारस्य-कार्यम् । वैकारिकादहंकारात् मनसा सह इन्द्रियाणामधिष्ठात्र्यो देवताः सम्भूता. इति योजना । तदेव = वैकारिकाहङ्कारमेव । मनोवृत्तिभेदात् स्थानभेदाच्चान्तःकरणमित्युक्तमिति योजना । मनोबुद्धिचित्ताऽहंकार-भेदतः तत्त्वविद्भिरन्तकरणं चतुष्टयमित्युक्तमित्यन्वयः । तत्र मननहेतुत्वं मनस्त्वम् । इदमेव मनः शब्दादिसम्बद्धं सद्बन्धहेतुः, तत्परित्यागपूर्वकं सपरिकरभगवद्विषयप्रावीण्ये सति मोक्षहेतुरित्यमुमर्थं स्मृतिप्रमाणेन द्रढयति–मन एव हीति ॥ १६४ । १६५ । १६६॥

उक्तार्थमेव स्फुटयति ।

शब्दादिविषयासक्तं बन्धहेतुः प्रकीर्तितम् ।
विषयत्यागपूर्वं यद्धरिप्रावण्यतां गतम् ॥ १६७ ॥
गीतोक्तसाधनद्वारा मोक्षहेतुर्निरूपितम् ।
मननादिक्रियाहेतुर्मनस्तत्परिकीर्तितम् ॥ १६८ ॥
बुद्धिर्बोधनहेतुश्च चित्तं चिन्तनकारणम् ।
अहङ्कारश्च देहादावहंकरणहेतुकः ॥ १६९ ॥

शब्दादित्यत्रादिपदेन रूपरसादीनां परिग्रहः । मनोलक्षणमाह । मननादीति । बुद्धेर्लक्षणं निर्वक्ति । बोधनेति बोधनकारणत्वमिति तदर्थः । चित्ताहङ्कारयोर्लक्षणमाह । चिन्तनेति ॥ १६७ । १६८ । १६९ ॥

मनोबुद्धिचित्ताहङ्काराणां चन्द्रब्रह्मरुद्रक्षेत्रज्ञा अधिष्ठात्र्यो देवता-इत्याह—

चन्द्रमा मनसः स्वामी बुद्धेर्ब्रह्मा प्रकीर्तितः ।
क्षेत्रज्ञश्चित्तसंज्ञस्य रुद्रोऽहंकारदेवता ॥ २०० ॥
वासुदेवादयस्तेषूपास्यत्वेन प्रकीर्तिताः ।
चित्ताहङ्कारयोर्बुद्धौ मनसीति यथाक्रमम् ॥ २०१ ॥
गलान्तर्वदनं नाभिः हृदयं तत् क्रमात् स्थलम् ।
तैजसादप्यहङ्काराज्जायन्ते इन्द्रियाणि हि ॥ २०२ ॥

क्वचिच्चैषामधिष्ठातृत्वेन वासुदेवादयश्चतुर्व्यूहदेवा अप्युच्यन्ते तेषां मन आदिषूपास्यत्वेन प्रतिपादनाभिप्रायत्वान्नोक्तसिद्धान्तविरोधः । चन्द्रादीनां तत्प्रवर्तकत्वं, व्यूहादीनां तदन्तर्यामितया तत्रोपास्यत्वमुभय-मपि घटत इत्यभिप्रेत्याह—वासुदेवादय इति ॥२०० ॥२०१॥

तेषां स्थानान्याह—गलान्तेति । मनसः स्थानं गलान्तरम्, बुद्धेर्व-दनम् । अहङ्कारस्य हृदयम् चित्तस्य नाभिरित्यर्थः । तैजसाहङ्कारस्य कार्यं दर्शयति—तैजसेति । दशसङ्ख्यकानि वाह्येन्द्रियाणि तैजसादहङ्-काराज्जायन्ते ॥ २०२ ॥

उक्तार्थं स्पष्टयति

वाह्यानि दशसङ्ख्यानि द्विप्रकारात्मकानि तु ।
ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्मेन्द्रियाणि च ॥ २०३ ॥
शब्दादिविषयज्ञानहेतवः प्रथमानि च ।
श्रोत्रं त्वक्चक्षुरेतानि रसनघ्राणयोःसह ॥ २०४ ॥
शब्दः स्पर्शश्च रूपश्च रसो गन्ध इति क्रमात् ।
विषया अपि विद्वद्भिः पञ्चैषां परिकीर्तिताः ॥ २०५ ॥

दिग्वातार्कजलेशाश्विनोऽधिष्ठात्र्योऽधिदेवताः ।
वचनादिक्रियाणाञ्च कारणानीतराणि वै ॥ २०६ ॥
वाक्पाणिपादपायूपस्थनामानि पञ्च च ।
वर्णोच्चारणादानगमनोत्सर्गसौख्यकम् ॥ २०७ ॥

द्विप्रकारेति । इन्द्रियाणि द्विविधानीति तदर्थः । द्वैविध्यं व्युत्पादयति-ज्ञानेति । शब्दादिविषयकवाह्यज्ञानासाधारणकारणत्वं ज्ञानेन्द्रियत्वमित्याशयेनाह,शब्दादीति । प्रथमानि = ज्ञानेन्द्रियाणि । तेषां नामानि-निर्दिशति—श्रोत्रमिति । शब्दमात्रग्राहकमिन्द्रियं श्रोत्रम् । रूपमात्रग्राहकमिन्द्रियं चक्षुः,एवमग्रेपिलक्षणानि ज्ञेयानि । ज्ञानेन्द्रियाणां विषयानाह । शब्द इति ! तेपामधिष्टातृदेवताःप्रदर्शयति—दिग्वातेति । वचनादानाद्यसाधारणकारणमिन्द्रियं कर्मेन्द्रियमित्याह—वचनादीति । इतराणि = कर्मेन्द्रियाणि । तेषां नाम निर्दिशति—वागिति । तेषां क्रियां निर्दिशति-वर्णेति । वर्णोच्चारणासाधारणकारणत्वं वागिन्द्रियस्य लक्षणम् ॥ २०३ । २०४ । २०५ । २०६ । २०७ ॥

तेषामेतानि' कर्माणि' ज्ञातव्यानि क्रमेण वै ।
अग्नीद्रोपेद्रमृत्युप्रजायतयश्च देवताः ॥ २०८ ॥

तेषाम् = कर्मेन्द्रियाणाम् । कर्मेन्द्रियाणामधिष्ठात्रीः देवताः निर्वक्ति अग्नीन्द्रेति ॥२०८॥

सर्वाणीमानि चाणून्यात्यन्तिकप्रलयावधि ।
अवस्थितिस्वभावानि शास्त्राचार्यैरितीरितम् ॥२०९॥

उभयविधेन्द्रियाणि । चाणूनि प्रति शरीरं भिन्नान्नीति यावदत्यन्तप्रलयमवस्थितिकानीत्याह— सर्वाणीति ॥२०९॥

शब्दादिपञ्चतन्मात्राण्यहङ्कारात्तु तामसात् ।
जायन्ते पञ्चभूतानां कारणानि तदा तदा ॥२१०॥

भूतादिलक्षणतामसादङ्काराच्छब्दादिपञ्च, तन्मात्राणि, आकाशादिपञ्चमहाभूतानि चोत्पद्यन्त इत्याह — शब्दादीति ।२१०।

दुग्धदध्नोर्यथो मध्ये परिणामः कललात्मकः ।
भूताहङ्कारयोः सूक्ष्मपरिणामस्तथैव यः ॥ २११ ॥

तामसाऽहंकारस्य भूतानाञ्चान्तरालिको व्यवहितसूक्ष्मपरिणात्मकं द्रव्यं तन्मात्रशब्दाभिधेयम् । दुग्धदध्नोरान्तरालिककलिलादिपरिणामवदमुमर्थञ्चाह—दुग्धेति ॥२११॥

तन्मात्रमुच्यते भूयः स्थूलं भूतं प्रचक्ष्यते ।
भूतादेः शब्दतन्मात्रमाकाशो जायते ततः ॥२१२॥

आकाशात्स्पर्शतन्मात्रं तस्माद्वायुः प्रजायते ।
वायोश्चरूपतन्मात्रं तस्मात्तेजः प्रजायते ॥२१३॥

तेजसो रसतन्मात्रं जायतेऽपां ततो भुवः ।
अद्भ्यश्च गन्धतन्मात्रं तस्मात्पृथ्वी प्रजायते ॥२१४॥

तदेवस्थूलावस्थापन्नं भूतशब्दवाच्यं भवति भूतादिसंज्ञकाहङ्काराच्छब्दतन्मात्रं शब्दतन्मात्रादाकाशः । आकाशात्स्पर्शतन्मात्रम् । स्पर्शतन्मात्राद्वायुः । वायोरूपतन्मात्रम् तस्मात्तेजः । तेजसोरसतन्मात्रम् । तस्मादापः । अद्भ्यो गन्ध तन्मात्रम् । तस्मात्पृथ्वी जायतइत्याह—स्थूलभूतमिति ॥२१२।२१३।२१४॥

शब्दः स्पर्शश्च रूपञ्च रसो गन्धइति क्रमात् ।
एते गुणा विशेषा हि भूतानां परिकीर्तिताः ॥२१५॥

एक एव गुणः शब्द आकाशस्य प्रकीर्तितः ।
गुणौ द्वावेव वायोर्वै तेजसश्च त्रयो गुणाः ॥२१६॥
चत्वारोऽपां गुणाः प्रोक्ताः पृथिव्याः सर्वइरिताः ।
स्वासाधारणएकस्तु चान्ये साधारणा मताः ॥२१७॥
देहधारणहेतुर्यो वायुः प्राणः स उच्यते ।
स तु पञ्चविधः प्रोक्तो गतिस्थानप्रभेदतः ॥२१८॥
प्राणोपानस्तथा व्यान उदानश्च समानकः ।
एभिर्नामभिराख्यातास्तत्तत्स्थानमथोच्यते ॥२१९॥

पृथिव्यादिभूतानां गुणान् दर्शयति—शब्द इति ॥ २१५ ॥ नभसः शब्दमात्रम् , वायौ शब्द स्पर्शौ,शब्दस्पर्शरूपाख्यास्तेजसो गुणाः । आपां गुणाःशब्दस्पर्शरूपाख्याः । शब्दादिपञ्चगुणाः पृथिव्याः । तस्या असाधारणगुणस्तुगन्धः ।.२१६॥२१७॥

प्राणवायोर्लक्षणमाह—देहेति। तं विभाजते । स इति । तेषांनामान्याह । प्राण इति तेषां नासादिस्थानान् उर्ध्वादिगतिंश्च दर्शयितुमाह—तत्स्थानमिति ॥२१८ । २१९॥

तत्रोर्ध्वगतिमान्प्राणो नासादिवृत्तिरुच्यते ।
अधोगतिरपानश्च पायुस्थानक उच्यते ॥ २२० ॥
विश्वग्गमनवान् व्यानोऽखिलशरीरवृत्तिकः ।
उद्गारहेतुरन्नादेरुदानः कण्ठवृत्तिमान् ॥ २२१ ॥
अन्नाद्यशितपीतादिसमीकरणहेतुकः ।
सर्वाङ्गवृत्तिरित्युक्तः समानः पञ्चमः श्रुतौ ॥२२२॥

इत्थं प्रकृतिमारभ्य पञ्चभूतान्तकानि हि ।
चतुर्विंशतितत्त्वानि प्राकृतानीति निश्चितम् ॥२२३॥
प्रकृतिश्च महत्तत्त्वमहङ्कारस्तृतीयकः ।
पञ्चभूतानि च स्थूलदेहस्य कारणानि वै ॥२२४॥

तस्य स्थानमाह—नासादिरिति ॥२२१॥

पीताशितपानाद्युद्गारक्रियाहेतुरुदानः । तस्य स्थानमाह—कण्ठेति ॥२२२॥

प्रकृतिमहदहङ्काराः मनो दशेन्द्रियाणि, तन्मात्रपञ्चकं भूतपञ्चकञ्चेति चतुर्विंशतितत्त्वानीत्याह इत्थमिति । स्थूलदेहस्य कारणान्याह—प्रकृतिश्चेति ॥२२३॥२२४॥

उपादानात्मकानीति शरीरेन्द्रियाणि तु ।
तमाक्रम्य स्थितानीति यथा रत्नानि भूषणे ॥२२५॥

स्थूलदेहस्योपादानकारणानि, इन्द्रियाणि । भूषणे रत्नानीव तदाक्रम्य स्थितानीत्यर्थः ॥ २२५ ॥

सूक्ष्मदेहस्य कारणान्याह—

तन्मात्राणि मनश्चैकमिन्द्रियाणि दशैव च ।
प्राणश्चेति तु सूक्ष्मस्य देहस्य कारणानि वै ॥२२६॥
षोडशव्यपदेशस्तु स्पर्शतन्मात्रप्राणयोः ।
कार्यकारणयोरेकीभावेनैव हि सङ्गतः ॥२२७॥

प्राणस्य तन्मात्रकार्यत्वात्तेनैकीकृत्य श्रुतौ षोडशत्वसङ्ख्यत्वव्यपदेशः इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति-श्रुतिः । २२६ । २२७ ॥

शरीरं चेतनाधेयं भोगागारश्च कथ्यते ।
नित्यानित्यविभेदेन द्विविधं परिकीर्तितम् ॥२२८॥
नित्यं दिव्यगुणागारं शरीरं परमात्मनः ।
श्रीपतेरुच्यते शास्त्रप्रमाणेन महात्मभिः ॥२२९॥

शरीरलक्षणमाह—शरीरमिति । चेतननियताधेयत्वेसति तद्भोगायतनत्वं शरीरस्य लक्षणम्। भोगायतनेषु प्रासादादिष्वतिव्याप्तिवारणाय सत्यन्तम् । भूतलनिष्ठाधारतानिरूपिताधेयत्वस्य चेतनभोगायतनत्वस्य च घटपटादिषु सत्त्वात्तत्रापि शरीरलक्षणस्यातिव्याप्तिवारणाय चेतन-व्याप्यत्वमाधेयत्वविशेषणम् । चेतननियताधेयत्वस्यात्मनो धर्मभूतज्ञाने सत्त्वात्तत्रापि शरीरव्यवहारापत्तिस्तन्निरासाय विशेष्योपादानम् । एतेन चेतनशरीरयोराधाराधेयभावः सूचितः । शरीरं विभजते—नित्यानित्येति । आद्यमुदाहरति—नित्यमिति । श्रीपुरुषोत्तमस्य ज्ञानशक्तिबलैश्वर्यतेजोवीर्य्यसौकुमार्य्यमार्दवसौशील्यार्जवसौहार्दसर्वशरण्यत्वसौम्य कारुण्यस्थिरत्वधैर्यदयामाधुर्य्यसौन्दर्य्यादिगुणार्णवं सच्चिदानन्दरूपं दिव्य-मङ्गलविग्रहमित्यर्थः । सूत्रिताश्चैते भगवता बादरायणेन । "विवक्षित गुणोपपत्तेश्चेति ।" "सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । नमः कमलनेत्राय नमः कमलमालिने । एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यकेशः हिरण्यश्मश्रुः, अप्रणखात्सुवर्णः । रुक्मवर्णं कर्त्तारमीशम् , आनन्दममृतम् यद्विभाति" इत्यादिश्रुतिभ्यः । २२८ । २२९ ॥

तथैव नित्यमुक्तानां पार्षदानामपि श्रुतम् ।
अनित्यं द्विविधं प्रोक्तमकर्मजश्च कर्मजम् ॥२३०॥
अकर्मजं विराडादिशरीरं परमात्मनः ।
प्राकृतत्वात्तथा तस्य पार्षदानां तदिच्छया ॥ २३१ ॥

लीलार्थं तैरिहायातं तदनित्यं प्रकीर्तितम् ।
कर्मजं कर्मवैचित्र्याज्जङ्गमादिस्वरूपकम् ॥ २३२ ॥

रामकान्तस्य दिव्यमङ्गलविग्रहत्वं महात्मभिः महोदरबुद्धिभिः उच्यत इतियोजना। नित्यमुक्तपार्षदानामपि दिव्यमङ्गलविग्रहवत्त्वं श्रुतम्। गर्भजन्मजरामरणादिप्रकृतितत्संसर्गतत्कार्य्यदुःखविषयकानुभवशून्यत्वे सति नित्यभगवदीयदर्शनादिभजनानुभवानन्दैकरसानित्यमुक्तशब्दवाच्याः पार्षदा विश्वक्सेनगरुडादयः। कर्मजन्याकर्मजन्यभेदेनानित्यशरीरस्य द्वैविध्यमाह—अनित्यमिति। तदुदाहरति—अकर्मजमिति। परमात्मनो विराडादिशरीरमकर्मजमिति योजना। तस्य=विराट्शरीरस्य। प्राकृतत्वात्। तथा अनित्यत्वम्। तदिच्छया भगवदिच्छया पार्षदानां तैः शरीरैः कृत्रिमैः लीलार्थं, अस्मिन् भूमण्डले आयातमागतम् भावे क्त प्रत्ययः। तदनित्यम्=पार्षदसम्बन्धिभौतिकशरीरमनित्यमिति शास्त्रैः प्रकीर्तितम्। २२९। २३०। २३१। २३२॥

देवतिर्यङ्मनुष्यादिभेदेनानेकधा स्मृतम्।
महदादिशरीरान्तं सर्वं कार्यं प्रचक्ष्यते ॥२३३॥
अवस्थान्तरमापन्नमप्यभिन्नं हि कारणात्।
यथाहि मृण्मयं कार्यं घटाद्याकारतां गतम् ॥२३४॥
मृदभिन्नं तथा कार्यं सर्वंकारणतोऽस्ति वै ।
सद्रूपं कारणं द्रव्यं सूक्ष्मावस्थं तदेव च ॥ २३५ ॥
नामरूपादिभाक्त्वेन स्थूलं कार्यं प्रचक्ष्यते ।
यदिदं किञ्चदित्याद्याः सदेवेति पुनःश्रुतिः ॥२३६॥
नाऽसतो विद्यते भावश्चासतः सम्भवः कुतः ।
एवं श्रुत्यादिवाक्येभ्यः कार्य्यसत्त्वावधारणात् ॥२३७॥

कर्मजम् = कर्मजन्यम् । कर्मवैचित्र्यात् = कर्मतारतम्यात् । तच्च स्थावरजङ्गमादिभेदादनेकविधम् । स्थावरम् = भूधरवृक्षादिरूपम् । जङ्गमं देवतिर्य्यङ्मनुष्यनारक्यादिरूपम् । महदादीति । प्रथमं परमेश्वरेच्छा, तत्तन्त्रप्रकृतिर्गुणवैषम्यात् कार्योन्मुखं प्राप्ता सती महत्तत्वं-व्यञ्जयति । तदेवाध्यवसायहेतुः सात्त्विकादिभेदात त्रिविधः । ततोऽहङ्कारः सोऽपि पूर्ववत् । पञ्चकं भूतपञ्चकं तत् स्थूलशरीरमेतत्सर्वं कार्यशब्दवाच्यम , महदादिशरीरान्तं सर्वमपि तत्तदवस्थापन्नं कारणादभिन्नमेव तत्कार्य्यत्वात् । यथा मृत्पिण्डजन्यं मृण्मयं घटाद्यवस्थापन्नमपि मृदभिन्नमेव तद्वत् । हीति निश्चये । कारणद्रव्यं सद्रूपं सूक्ष्मावस्थापन्नं कारणत्वेनाभिधीयते । कारणद्रव्यमेवावस्थान्तरापन्नं सद्रूपं कार्यत्वेन व्यपदिश्यते कार्यकारणयोरभेदात् । "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति न्यायात् अवस्थान्तर्भाक्त्वेन नामरूपसङ्ख्याव्यवहारादिभेदसिद्धिः । यदिदं किञ्चित्तत्सत्यमित्याचक्षते । कार्यस्य सत्यत्वप्रतिपादिका याः श्रुतयस्सन्ति ता उदाह्रियन्ते यदिदमिति । "यदिदं किञ्चित्तत्सत्यमित्याचक्ष्यते" असतः कार्यस्य भावः सत्ता न विद्यते । असतः कार्यस्य सम्भव उत्पत्तिः कुतः "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" एतासु श्रुतिषु । २३३ । २३४ २३५ । २३६ । २३७ ॥

**सत्त्वमेव हि कार्य्यस्य वैदकैरुररीकृतम् ।**
**सूत्रकारोऽपि कार्य्यस्य सत्त्वमेवोक्तवान्स्वयम् ॥२३८॥**

इदं जगत् सद् आत्मैवेति सामानाधिकरण्यश्रुत्या सृष्टेः प्राक् कार्यस्य कारणात्मना सत्त्वं श्रूयतेऽतः कार्यस्य सत्यत्वं निश्चीयते तस्मात्कार्यस्य सत्यत्वं वेदस्य प्रामाण्यमभ्युपगच्छद्भिरभ्युपेयते। २३६॥ श्रौतार्थे भगवतःसूत्रकारस्य सम्मतिमाह सूत्रकारोऽपीति । तदनन्यत्वमारम्भणशब्दादिभ्यः" । २।१ । १४ । भावे चोपलब्धेः । १५ ।

सत्त्वाच्चावरस्य । १६ । असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्य-शेषाद्युक्तेःशब्दान्तराच्च । १७ । पटवच्च । १८ । यथा च प्रमाणादिः ।१० एतैस्सूत्रैर्भगवद्बादरायणाचार्यैःकार्यस्य सत्यत्वमभिहितम् । २३८ ॥

**अन्यथाऽऽकाशपुष्पादेरप्युत्पत्तिश्च सम्भवेत् ॥ २३९ ॥**

विपक्षे बाधकतर्कमुपन्यस्यति अन्यथेति । कार्यस्यासत्यत्वाभ्युपगम इति तदर्थः ॥ २३९ ॥

प्राकृतानि जीवानां भोग्यभोगोपभोग्यस्थानानीत्याह—

**प्राकृतानीति जीवानां विचित्राण्डवर्त्तिनाम् ।**
**भोग्यतत्साधनस्थानरूपाणीति तथोच्यते ॥ २४० ॥**
**भोग्यं शब्दादिकं तत्र तद्युक्तं द्रव्यमेव च ।**
**देहेन्द्रियमनोबुद्ध्यादीनि तत्साधनानि हि ॥ २४१ ॥**
**भोगसाधनानि लोका वै ब्रह्माण्डान्तश्चतुर्दश: ।**
**तान्येव श्रीहरेः क्रीडास्थानोपकरणानि च ॥ २४२ ॥**
**भोग्यानुकरणानीति शास्त्रविद्भिरुदीरितम् ।**
**नोक्तं ब्रह्माण्डसंस्थानं ग्रन्थवृद्धिभयादिह ॥ २४३ ॥**
**यतः शरीरमन्नस्य विकारो महदादिषु ।**
**पुरुषोऽन्नमयस्तस्मात्कथितो वेदवादिभिः ॥ २४४ ॥**

विचित्रेति—वैचित्र्यसंस्थानप्रकारस्तु विष्णुपुराणे श्रीपराशरेण द्वितीये अंशे तृतीयाध्याये प्रदर्शितः भोग्यादिकंकिमितिजिज्ञासायामाह-भोग्यमिति । शब्दादिकमित्यत्रादिना रूपरसादीनां परिग्रहः । तत्र = तेषु मध्ये । तद्युक्तम् = शब्दाद्युक्तम् । तत्साधनानि ब्रह्माण्डान्तर्गतचतुर्द-शभुवनानि तान्येव प्रकृत्यादीनि श्रीपुरुषोत्तमस्य क्रीडातदुपकरण-

तप्स्थानानीत्यर्थः । शास्त्रविद्भिरिति । संन्यासप्रकरणपठिताऽऽरण्य-श्रुतिः । भूर्लोक,भुवलोक,स्वर्लोक,महर्लोक,जनलोक,तपोलोक,सत्यलोकं चातल,वितल,सुतल,तलातल,रसातल,महातलं ब्रह्माण्डं च विसर्जयेदिति श्रीपराशरेण श्रीविष्णुपुराणे ब्रह्माण्डसंस्थानं जम्बूद्वीपः समस्तानमेतेषां मध्यमस्थितः इत्यादिग्रन्थेनोक्तं तच्च ग्रन्थभूयंस्त्वभयान्नास्माभिर्लिख्यते महदादिशरीरपर्यन्तेषु मध्ये शरीरम्, अन्नविकारत्वादन्नमयः पुरुष उच्यत इत्याह—यतइति ॥ २४० । २४१ । २४२ । २४३ । २४४ ॥

मनोज्ञानेन्द्रियैर्युक्तः पुरुषः स्यान्मनोमयः ।
प्राणादिपञ्चकश्चापि तथा कर्मेन्द्रियैःसह ॥ २४५ ॥
प्राणमयश्च तत्त्वज्ञैः पुरुषैः सोऽभिधीयते ।
जीवात्मा पुरुषस्तत्र विज्ञानमय उच्यते ॥ २४६ ॥
आनन्दमय आत्माऽत्र पुरुषो ब्रह्मसंज्ञकः ।
इत्येते पुरुषाः पञ्च ह्याम्नातास्तैत्तिरीयके ॥ २४७ ॥
श्रीश्रीनिवासपादैर्हि भाष्यकारैश्च विस्तरात् ।
एते निरूपिताः सुष्ठु भाष्ये वेदान्तकौस्तुभे ॥ २४८॥
सृष्टिव्युत्क्रमतश्चैव लयो ज्ञेयो मनीषिभिः ।
ननु कारणनाशेन कार्य्यस्थितेरसम्भवात् ॥ २४९ ॥

द्वितीयमनोमयं पुरुषमाह—मनइति । आनन्दमयश्च पुरुषः परमात्मेत्याह—आनन्दमय इति । उक्तार्थं श्रुतिप्रमाणेन द्रढयति—तैत्तिरीयक इति । तत्र अन्नमयादिचतुःपुरुषाननुक्रम्याम्नायते । तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मा आत्मा आनन्दमयस्तेनैष पूर्ण-इत्यभिहितम् । उक्तार्थे श्रीभाष्यकाराणां सम्मतिमाह-श्रीश्रीनिवासपादैरिति । सृष्टेः व्युत्क्रमेण लयमित्याह-सृष्टीति । क्रमश्चेत्थं-पृथिवीगन्ध

तन्मात्राद्वारेणाप्सु लीयते आपोरसतन्मात्राद्वारा वायौ । स च स्पर्शत न्मात्रद्वारा व्योम्नि, तच्च शब्दतन्मात्रलयपूर्वकं भूतादितामसाहङ्कारे । इन्द्रियाणि राजसाहङ्कारे । मनोदेवाश्च वैकारिके । त्रिविधोऽप्यहंकारो महति । सचाव्यक्ते । सोऽपि पुरुषे । सच ब्रह्मणि पुरुषोत्तमाख्य इति । ॥२४५ । २४६ ॥ २४७ । २४८ । २४९ ॥

लयोऽपि कारणे सूक्ष्मरूपेणावस्थितिर्ध्रुवम् ।
व्यवहाराद्ययोग्यत्वान्नाशशब्देन चोच्यते ॥ २५० ॥

स्वकारणे कार्यस्य लयःसूक्ष्मरूपेणावस्थितिरिति लयशब्दार्थ-निर्वक्ति = लयोऽपीति । सूक्ष्मावस्थापन्नस्य कार्यस्य कार्यनियत-मानयेत्यादिव्यवहारायोग्यत्वान्नाशशब्देनापि लय उच्यत इत्याह—व्यवहारेति २५० ॥

नहि कार्यस्य चात्यन्तनाश एव लयः श्रुतः ।
तस्मात्सङ्कोच एवास्य पटवल्लय उच्यते ॥२५१ ॥
इति प्राकृततत्त्वनिर्णयः ।

नहि कार्यस्यात्यन्तोच्छेदःलयशब्देन व्यपदिश्यते इत्याह—नहीति निगमयति-तस्मादिति । कार्यस्य सद्रूपत्वात्कार्यस्य सङ्कोचोलय-शब्दार्थः यथापटःस्वकारणे सूक्ष्मरूपेण सदेव स्थितः सत्यम् । तस्मात्सङ्को-चावस्थाएव लयशब्देन निर्दिश्यते तद्वद्विश्वम् ॥ २५१ ॥

अथ कालतवत्त्वं निरूप्यते ।

अथ कालाख्यतत्त्वञ्च सङ्क्षेपेण निरूप्यते ।
प्रकृताप्रकृताभ्यां यो विलक्षणो ह्यचेतनः ॥२५२॥
काल स उच्यते शास्त्रे नित्यो विभुःस्वरूपतः ।
सृष्टेरादौ च कालस्य सत्त्वं हि श्रूयते श्रुतौ ॥२५३॥

सदा सर्वत्र कालस्य प्रत्ययो जायते खलु ।
भूतादेश्च चिरक्षिप्रव्यवहारस्य कारणम् ॥२५४॥
सर्गप्रलययोश्चापि निमित्तं परिकीर्तितम् ।
परमाण्वादि सङ्ख्याया परार्द्धावधि कारणम् ॥२५५॥

कालस्वरूपं निरूपयति–अथेति । त्वम्पदार्थप्राकृतनिर्णयानन्तरमित्यर्थः । प्राकृताप्राकृतोभयभिन्नत्वे सत्यचेतनद्रव्यत्वं काललक्षणम् प्रधाने नित्यविभूतौ चातिव्याप्तिवारणाय सत्यन्तम् । प्रत्यगात्मनि सर्वेश्वरे चातिव्याप्तिनिरासायविशेष्यदलम् । मायादिपदैरभिधीयमानं द्रव्यं प्राकृतम् नित्यविभूतिविष्णुपदादिशब्दाभिधेयमप्राकृतम् ताभ्याभिन्नो नित्योविभुःकाल इत्यर्थः । "सदेव सोम्येदमग्र आसीदिति" श्रुतौ सृष्टेःप्रागग्रशब्दवाच्यस्य कालस्य सत्यत्वं श्रूयत इत्याह–सृष्टेरिति । ननु कालस्य भूतत्वनिर्देशादनित्यत्वमेव, ध्वंसाभावप्रतियोगिन एव वस्तुनोभूतत्त्वनिर्देशान्नोक्तार्थसिद्धिरितिचेन्न,यतःनहिध्वंसाभावप्रतियोगिनएवभूतत्त्वनिर्देशाईत्वमितिनियमस्तस्मिन्नेववाक्ये नित्यशुद्धस्य ब्रह्मणो भूतत्वनिर्देशत्त्वश्रवणात्तस्यापि ध्वंसाभावोभवद्भिरङ्गीकार्य एव।तथासति ब्रह्मणोमिथ्यात्वसा म्यमेव।अयंभावः । कालस्यनित्यत्वादखण्डत्वेऽपि,औपाधिककार्यरूपेणानित्यत्त्वस्यापीष्टत्वात्सर्वंसमञ्जसम् । उपाधिश्च सूर्यपरिभ्रमणरूपाक्रियैव । तेनैवोपाधिना परमाण्वादिपरार्द्धावसानसमयनिर्देशो ह्यविरुद्धमेतत्सर्वमुपरिष्टाद्व्यक्तीभविष्यति । कालस्य सत्त्वे प्रतीतिमपि प्रमाणयति–सदेति । २५२ । २५३ । २५४ । २५५ ॥

भूतादेरिति कालस्य लक्षणं निर्वक्ति—अत्र आदिना भविष्यद्वर्त्तमानयोः परिग्रहः । एतेनास्यकार्यमपि दर्शितम् । भूतभविष्यदादिव्यवहारहेतुत्वं कालस्य लक्षणं, तद्व्यवहारस्तस्यौपाधिककार्यभूत इत्यर्थः । परमाण्वादिसङ्ख्याया इति यावता दिवाकरःपरमाणुपरिमाणकं देशमप-

क्रामति, स कालः परमाणुशब्दाभिधेयः द्वौ परमाणू द्वयणुकस्त्रयोद्वयणुकास्त्रसरेणुः। त्रसरेणुत्रयं त्रुटिः। त्रुटिशतं वेधः एवंरीत्या परार्द्धपर्य्यतं-निरूपितं तद्वेदान्तरत्नमञ्जूषायां तृतीयश्लोकव्याख्यायां कालनिरुपणावसरे। २५४। २५५॥

**प्राकृतं सर्वमेवस्याधीनश्च परिकीर्तितम्।**
**नियामकोऽपि सर्वस्य नियम्यः श्री हरेस्तु सः॥२५६॥**
**हरेर्लीलाविभूतौ यत्कालाधीनत्वमस्ति हि।**
**तच्चानुकरणं ज्ञेयमीश्वरत्वान्नचान्यथा॥ २५७॥**

तस्य शक्तिं दर्शयति-सर्वमिति। वस्तुमात्रं कालाधीनम् कालपरतन्त्रम् यद्यप्यत्रप्राकृतशब्दप्रयोगेणैवेश्वरादिव्यावृत्तिस्तथापि मन्दमतीनां सन्देहनिवृत्तये स्पष्टत्वेनाह—नियामक इति नियम्य इति। सर्वेश्वरनियम्यत्वं कालस्य तस्य सर्वनियन्तृत्वात् सर्वेश्वराधेयत्वतद्व्याप्यत्वतदात्मकत्वानामुपलक्षणञ्चात्र नियम्येति पदम्। एतेन सेश्वरजगत्कालाधेयमितिपक्षो निरस्तो वोध्यः। ज्ञः कालकालो गुणिसर्वविद्य इति श्रुतेः लीला-विभूतौ तुपरमेश्वरस्य कालपारतन्त्र्यानुकरणमात्रमेव नित्यविभूतौ तु नतत् प्रभावशङ्कापीत्याह-हरेरिति। अनुकरणे हेतुमाह-ईश्वरत्वादिति। सर्वनियन्तृत्वादित्यर्थः। विपक्षे वाध कतर्कमुपन्यस्यति-अन्यथेति। ईश्वरा-नुकरणत्वाभावइत्यर्थः यदि लीलाविभूतेः कालपारतन्त्र्यं स्यात्तदा सर्वेश्वरस्य सर्वनियतृत्वं न स्यादिति भावः॥ २५६॥ २५७॥

तस्य = सर्वेश्वरस्य। कलामुहूर्तादिमयश्च कालो नयद्विभूतेः परिणामहेतुरित्याद्विवचनात् सर्वेश्वरनित्य विभौ तु न कालप्रभावशङ्कागन्धोऽपीत्यर्थ

**तस्य नित्य विभूतौ तु पारतन्त्रस्य काकथा।**
**स च कालः स्वरूपेणाखण्ड एवोच्यते बुधैः॥२५८॥**

कार्य्यरूपेण चानित्यः कार्य्यन्त्वौपाधिकमतम् ।
परिभ्रमणरूपा या क्रिया सूर्य्यस्य विद्यते ॥ २५६ ॥
उपाधिःकथ्यते सा वै शास्त्रेणैव विवेकिभिः ।

इति कालतत्त्वम् ।

कालस्यनित्यत्त्वादखण्डत्वेऽपि औपाधिककार्य्यरूपेणानित्यत्वस्यापीष्टत्त्वात् उपाधिश्च सूर्य्यपरिभ्रमणरूपाक्रियैव तेनैवोपाधिना परमाण्वादिपरार्द्धान्तावसाननिर्देशोह्यविरुद्ध इत्याह–सचेति । अनादिर्भगवान्कालोनान्तोऽस्य द्विज विद्यते नसोस्ति प्रत्ययो लोके यत्र कालो न भासते इत्यादिस्मृतिभिःकालस्यानाद्यनन्तत्वं वोध्यतइत्यर्थः । २५८ । २५९ ॥

इति कालतत्त्वस्य निरूपणम् ।

अथाप्राकृततत्त्वस्वरूपादिकम् ।

अथाप्राकृततत्त्वस्य स्वरूपादिकमुच्यते ।
प्रधानकालभिन्नं यद्द्रव्यं चाचेतनं हि तत् ॥ २६० ॥
अनावरकरूपश्च प्रकाशात्मकमुच्यते ।
आनन्दव्यञ्जकत्वाच्चानन्दसंज्ञं प्रकीर्त्यते ॥ २६१ ॥

अथेति । कालवस्तुनिरूपणानन्तरमित्यर्थःतस्य लक्षणमाह–प्रधानेति । प्रकृतिकालभिन्नत्वेसत्यचेतनत्वमप्राकृतलक्षणम् अचेतनत्वमात्रोक्तौ प्रकृतिकालादावतिव्याप्तिस्तन्निराशाय सत्यन्तम् । प्रत्यगात्मन्यति व्याप्तिवारणाय विशेष्यदलम्–तस्य स्वरूपं निर्दिशति अनावरकेति । "आदित्यवर्णंतमसःपरस्तादिति " श्रुतिरुक्तार्थे मानम् आदित्यवर्णमित्यनेन प्रकाशरूपत्वमनावरकत्वञ्चोक्तम् तमसःपरस्तादित्यनेन चतमः शब्दवाच्यप्रकृतिकालाभ्यां भिन्नत्वमित्यर्थः एवं सामन्यतो निरूप्यतस्य विशेषं संग्रहीष्यन् तात्पर्य्यविशेषानाह–आनन्देति"योऽस्याध्यक्षः-

परमे व्योमन् तिष्ठति तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्यादिश्रुति-रुक्तार्थे प्रमाणतया द्रष्टव्याः ॥ २६० । २६१ ॥

**नित्यविभूतिवैकुण्ठविष्णुपदादिसंज्ञकम् ।**
**प्रकृतिमण्डलाद्भिन्नदेशीयमपि व्यापकम् ॥२६२॥**
**तन्मध्ये वर्त्तमानन्तु परिच्छिन्नवदीच्यते ।**
**एतदप्यपरिच्छिन्नं श्रीकृष्णोनेति दर्शितम् ॥२६३॥**

व्यापकम् = अपरिच्छिन्नम् । तन्मध्ये = प्रकृतिमण्डलमध्ये परि-च्छिन्नमिव दृश्यमानमपरिच्छिन्नमेवेत्यर्थः एतदपीति । प्राकृतदेशीयम् एकादशाऽध्याये विश्वरूपदर्शने स्वयमेव श्रीभगवता वासुदेवेन गीतं दर्शितञ्चार्जुनायेत्यर्थ ॥ २६२ । २६३ ॥

**तच्च भगवदीयानादीच्छया वहुधोच्यते ।**
**तस्य च नित्यमुक्तानां भोग्यादिरूपतस्तथा ॥२६४॥**
**तदीयानाञ्च भोग्यं यत् श्रीमन्मङ्गलविग्रहम् ।**
**तन्माधुर्यादिपानं हीत्युक्तं कृष्णमनुव्रतैः ॥२६५॥**

तच्च = भगद्धाम भगवदीयानादिसङ्कल्पात् तस्य तदीयानां नित्य मुक्तानाञ्च भोग्यादिरूपेणानेकरूपम् तस्य = श्रीभगवतः तदीयानाम् - भ-गवदीयानां पार्षदादीनाम्। तन्माधुर्यादिपानम् = सच्चिदानन्दमयश्रीदिव्य-मङ्गलश्रीकृष्णविग्रहस्य माधुर्यादिपानम् उक्तार्थस्य स्वकपोलकल्पितत्त्वं-निरसितुमाह-कृष्णमनुव्रतैः ॥ २६४ । २६५ ॥

**भोग्योपकरणं तत्रालङ्काराद्यभिधीयते ।**
**स्थानं मणिमयं तत्र चत्वरं मण्डपादिकम् ॥२६६॥**

तत्र - नित्यधाम्नि अलङ्कारादीत्यत्रादिना स्वविग्रहाद्यायुध-

पानासनकुसुमसुगन्धस्रक्चन्दनादिकं ग्राह्यम् भोग्यस्थानान्याह— स्थानमिति । तत्र-नित्यधाम्नि आदिना गोपुरप्राकारसरोवरोपवन-कल्पवृक्षादीनां परिग्रहः ॥ २६६ ॥

तत्र च श्रीहरेर्नित्यमुक्तानां विग्रहादिकम् ।
तदीयानाद्यन्तेच्छासिद्धस्वाभाविकं खलु ॥ २६७ ॥

तत्र = नित्यधाम्नि नित्यमुक्तानां दिव्यमङ्गलविग्रहस्यानादित्व-मनादियोगत्वञ्च स्वभाविकम् नित्यमुक्तत्वं नाम त्रैकालिकसंसारदुःखत्वा-वच्छिन्नत्यन्ताभावाश्रयत्वेसति सदैव स्वभावतःपरानुभावितततत्स्वरूपगुणा दिविषयकानुभवानन्दवत्त्वम् मुक्तेष्वतिव्याप्तिवारणायाद्यविशेषणम्- मुक्तानां मुक्तेःप्राक्संसारदुःखात्यन्ताभावाभावात् ब्रह्मण्यतिव्याप्तिवार-णाय परानुभावितपदम् । तत्र परानुभावितत्त्वाभावात् "सदा पश्यन्ति— शूरय" इति श्रुतेःबद्धमुक्तानान्तु विग्रहस्यानादित्वेऽपि तद्योगमात्रस्य मोक्षा वस्थायां भगवत्प्रसादैकलभ्यत्वम् ।

अनादिकर्मात्मिकाविद्याप्रयुक्तप्रकृतिसम्बन्धतत्कार्यदुःखा-त्तद्भोगोपयोगिदेहादिरूपबन्धविनिर्मुक्ताः सन्तो भगवद्भावमापन्ना बद्ध-मुक्ता उच्यन्ते । नित्यमुक्तेष्वतिप्रसङ्गवारणायादिमविशेषणाम् । बद्धेषु व्यभिचारवारणयोत्तरदलम् ॥ २६७ ॥

अथच बद्धमुक्तानां श्रीमुकुन्दप्रसादतः ।
अनादिसिद्धरूपैस्तैः संयोग एव उच्यते ॥२६८॥
तेषाञ्च जन्यताशङ्का निर्विकारत्वतो नहि ।
पूर्व सिद्धाहि वस्त्राद्या लङ्कारश्च महोत्सवे ॥२६९॥
स्वभृत्येभ्यो यथा राज्ञादीयन्ते बहुमूल्यकाः ।
तथा प्रकृतिसम्बन्धविनिर्मुक्तेभ्य एव हि ॥२७०॥

दीयन्ते श्रीमुकुन्देन सालङ्कारादिविग्रहाः ॥ २७२ ॥

भोग्यवस्तूनां जन्यताशङ्कां वारयति-तेषाञ्चेति। तेषाम् = अप्राकृतपदार्थानाम्। नित्यविभूतेः कालातीतत्वान्निर्विकारत्वम्। कालमुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः तवाष्टगुणमैश्वर्य्यंनाथ ! स्वाभाविकं परमित्यादिवचनात्। तत्र कालप्रभावाभावान्निर्विकारत्वम् तन्मूलकानुमानञ्चात्र प्रमाणम्। अप्राकृतद्रव्यं निर्विकारं कालातीतत्वात् यदेवंतदेवम्, आत्मवदिति, व्यतिरेके च-यन्नैवं तन्नैवं पृथिव्यादिवदिति। तथोत्सवसमये प्राक्सिद्धा वस्त्रभूषणालङ्कारादयो राजभिः स्वभृत्येभ्योदीयन्ते, तथैव प्रकृतिवियोगसमये पूर्वसिद्धा नित्याः सर्वविकारशून्याविग्रहादयस्तत्सेवोपकरणरूपाः श्रीपुरुषोत्तमेन भृत्येभ्यो दीयन्ते इत्याह—पूर्वसिद्धा इति ॥ २७० । २७१ । २७२ ॥

भगवन्मङ्गलविग्रहश्च स्वरूपवदनन्तकल्याणगुणाश्रयो सच्चिदानन्दात्मक इत्याह—ईश्वरस्येति।

ईश्वरस्य तु देहो वै सच्चिदानन्दरूपकः ।
स्वरूपवदनन्तश्च कल्याणगुणसागरः ॥ २७३ ॥

तस्य गुणान् निर्वक्ति-निरतिशयइति ॥ २७३ ॥

निरतिशय-सौदर्य्यं मार्दवं-सुकुमारता ।
लावण्यौज्वल्य इत्याद्या अनन्तास्तस्य वै गुणाः ॥२७४॥
सर्वतो दर्शनस्पर्श गमनादिकशक्तिके ।
ब्रह्मणि न पृथक्कल्प्यमिन्द्रियं चक्षुरादिकम् ॥२७५॥
गौरवादिति च प्राहानिन्द्रियोऽपि च सर्वतः ।
गच्छतीत्यादिकाऽपाणिपादश्चेति श्रुतिःस्फुटम् ॥२७६॥

मुक्तानामपि तत्साम्यं भजतामिति निश्चयः ।
परं साम्यमुपैतीति मम साधर्म्यमागताः ॥२७७॥
इत्यादिवाक्यतो ज्ञेयो व्यवहारस्तदात्मना ।
कालातीतश्च तत्स्थानं तत्प्रभावो न तत्र हि ॥२७८॥

[ इत्यप्राकृताचित्तत्त्वम् ]

"सर्वगन्धः सर्वरसः अप्रणखात् सुवर्ण" इत्यादि श्रुतिभ्यः श्रीभगवतः सर्वदर्शनस्पर्शनगमनादिशक्तिमत्त्वान्न तत्रेन्द्रियादिविभागापेक्षा, गौरवात् । अनिन्द्रिय इति । अनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते अपाणिपादो जवनो ग्रहीता-पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिश्रुतयोऽनुसन्धेयाः। तत्साम्यं भजतामपि तथैव व्यवहार इत्याह—मुक्तानामिति । परमं साम्यं स्वरूपेण गुणादिना च सादृश्यं तथाच-प्रत्यगात्मनां ज्ञानस्वरूपत्वात्स्वरूपसादृश्यमपरिच्छिन्नज्ञानधर्मकत्वाद् गुणसादृश्यञ्च तत्त्वं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् नियन्तृत्वस्वातन्त्र्याभावेन ब्रह्मभिन्नत्वे सति सर्वज्ञत्वापहतपाप्मत्वादिभूयोब्रह्मगतधर्मवत्त्वाल्लक्षणसमन्वयः । "निरञ्जनः परमं साम्यमुपैति, मद्भावायोपपद्यते, बहवो ज्ञानतपसा पूता-मद्भावमागताः" भावपदञ्च स्वयमेव व्याख्यातम् । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः इति श्लोकेन । तदात्मना = भगवदात्मना । नित्यविभूतौ कालातीतवस्तुत्वान्न कालप्रभाव इत्याह—कालेति । तत्स्थानम् । तत्प्रभावः = कालप्रभावः । तत्र = नित्यधाम्नि । इत्यप्राकृताचित्तत्त्वस्य विवरणम् । २७३ । २७४ । २७५ । २७६ । २७७ । २७८ ॥

परब्रह्माख्यतत्त्वञ्च समासे नोच्यतेऽधुना ।
परमात्मा परंज्योतिर्नारायणादिशब्दितम् ॥ २७९ ॥

**ब्रह्मशब्दस्य जीवादावतिव्याप्तिश्च विद्यते ।**
**तद्व्यावर्त्तकएवात्र परशब्दस्तु विद्यते ॥ २८० ॥**
**क्षराक्षरपदार्थाभ्यामुत्कृष्टत्वमिहोच्यते ।**
**परत्वं शास्त्रमानेन तच्च कृष्णे समन्वितम् ॥ २८१ ॥**
**गीतायां श्रीमुखेनोक्तं तथात्वमात्मनः खलु ।**
**तस्माच्छ्रीकृष्ण एवेह परब्रह्मपदाभिधः ॥ २८२ ॥**

अथ परमात्मतत्त्वं निरूपयति – परेति। परब्रह्म आख्या अस्य तत् परब्रह्माख्यञ्च तत्त्वञ्च तथोक्तमिति विग्रहः। समासेन = सङ्क्षेपेण। परब्रह्माख्यमपरनाम्ना निर्वक्ति- परमात्मेति। "आत्मा वा इदमेक एवाग्रे आसीदेको ह वै नारायण आसीत" अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्टेषु सर्वतः। ज्योतिश्चरणाभिधानात् ।१।१।२५॥ इति श्रुतिसूत्राभ्यामात्माज्योतिर्नारायणादिपदवाच्यं परं ब्रह्मैवाभिहितमित्यर्थः ब्रह्मशब्दस्य चतुर्मुखवेदादावपि बृत्तित्वात्तत्रातिव्याप्तिवारयन्नाह-ब्रह्मशब्दस्येति। तद्व्यावर्तकः = चतुर्मुखवेदव्यावर्त्तकः। क्षराक्षराभ्यामुत्कृष्टत्वं परत्वमित्याह—क्षराक्षरेति। उक्तार्थं प्रमाणमुखेन द्रढयति—शास्त्रमानेनेति। प्रधानक्षेत्रज्ञपतिः पतिं पतीनामिति श्रुतेः। तच्च = परत्वञ्च। गीतायामिति। यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ यो मामेवमसंमूढो जानाति पुरुषोत्तमम्। स सर्वविद् भजति मां सर्वभावेन भारत श्रीकृष्णं पुरुषोत्तमत्वेन जानतः सर्ववित्त्वं प्रतिपादितं तस्मात् स एवात्र परब्रह्मशब्दाभिधेय इत्यर्थः। तथात्वम् = परत्वम्। निगमयात— तस्मादिति। श्रुतिस्मृतिप्रमाणादिति तदर्थः॥ २८०।२८१।२८२॥

ब्रह्मपदार्थं निरूपयति।

**ब्रह्म तु देशकालादिपरिच्छेदविहीनकम् ।**
**देशे काले च सर्बस्मिन् तथा सर्वेषु वस्तुषु ॥२८३॥**

एकमेव स्वरूपेण व्याप्तं ब्रह्मेति कथ्यते।
सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या प्रकीर्तितम् ॥ २८४ ॥

देशतः कालतः वस्तुतः परिच्छेदशून्यत्वे सति सर्वव्याप्यत्वं ब्रह्मणोलक्षणम्। देश इति। सर्वगतत्वं देशपरिच्छेदशून्यत्वम्'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा अन्तर्वहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेः। मया ततमिदं सर्वं जगदव्यक्तमूर्तिना। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवेति स्मृतेश्च। सर्वकालवृत्तित्वेनानाद्यन्तशून्यत्वं कालपरिच्छेदशून्यत्वम्। "अनाद्यनन्तं महतः परं ध्रुवम् निचाय्य तं मृत्युमुखात् प्रमुच्यते, इति श्रुतेः। नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपमिति भगवद्गीतावचनाच्च परिच्छिन्नवस्तुविलक्षणत्वं वस्तुपरिच्छेदशून्यत्वमित्यभिसन्धिः। सत्यमिति। सत्यत्वज्ञानत्वानन्तत्वं ब्रह्मणो लक्षणम्। तत्र च सत्यमात्रोक्तावचिद्वर्गेऽतिप्रसङ्गात् तद्वारणाय ज्ञानत्वमुक्तम्। चेतनस्यापि सत्यत्व-ज्ञानत्वोभयरूपवत्त्वात्तत्रातिव्याप्तिवारणायानन्तत्वमभिहितम्। अत्रानन्तपदेन स्वरूपगुणशक्तिभिरनन्तत्वं विवक्षितम्। अन्यथा जीवज्ञानेऽतिप्रसङ्गः-स्यादित्यर्थः। २८३ ॥ २८४ ॥

दोषैः पञ्चभिरस्पृष्टः क्लेशाख्यैश्च स्वभावतः।
तथा षडभिर्विकारैश्च त्रिभिर्मायागुणैस्तथा ॥२८५॥
अन्येषामपि मायायाः कार्याणां परमेश्वरे।
वातस्पर्शस्य लेशोऽपि कदाचिन्नैव विद्यते ॥२८६॥
बद्धक्षेत्रज्ञधर्मास्ते यतः प्रोक्ता मनीषिभिः।
अत्यन्ताभाव एषां यः परब्रह्मणि वर्त्तते ॥२८७॥

अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशा इति पातञ्जल--सूत्रे ये निर्दिष्टाः दोषाः स्वभावतः, अनादिप्रकृतितस्तैर्दोषैरस्पृष्टत्वं

परब्रह्मणः। तथोक्तमाद्याचार्यचरणैः "स्वभावतोऽपास्तसमस्तदोषमिति। विकारैः = जन्मास्तित्ववृद्धिपरिणामापक्षयमरणात्मकैः। मायागुणैः = सत्त्वरजस्तमोभिः। मायाकार्याणाम् = अहन्त्व ममत्वादीनां वातस्पर्शस्य लेशः कदाचिन्नास्ति परमेश्वर इति योजना। ते प्राकृतगुणास्तत्कार्यभूता बद्धक्षेत्रज्ञधर्माः यतः प्रतियोगिसिद्धिरूपकारणात् मनीषिभिः प्रोक्ताः। एषां समस्तदोषादीनामत्यन्ताभावो यः परब्रह्मणि वर्त्तते स = अशेष दोषात्यन्ताभावः सार्वज्ञ्यादिवद्भावरूपो धर्मविशेषः॥ २८७॥

स सार्वज्ञ्यादिवद्भावरूपो धर्मविशेषकः।
य आत्माऽपहतपाप्मेत्यादिका श्रुतिरेव हि॥२८८॥
सर्वदोषविहीनत्वे प्रमाणं विद्यते खलु।
क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः॥२८९॥
पराणां परमश्चेशो यत्र क्लेशादयो नहि।
इत्यादिनाह सर्वज्ञो वैष्णवे श्रीपराशरः॥२९०॥

परब्रह्मणि श्रीपुरुषोत्तमेऽशेषदोषात्यन्ताभावः श्रुतिप्रमाणेन निर्धारयति—य आत्मेति। आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघित्सोऽपिपासःसत्यकामः सत्यसङ्कल्प इति श्रुतिः, स्वभावतोऽपास्तसमस्तदोषे प्रमाणञ्चास्ति। उक्तार्थं श्रीपराशरवचसा द्रढयति—क्लेश-इति। अविद्याऽस्मिता रागद्वेषाभिनिवेशाः क्लेशाः, एते पञ्च क्लेशाख्य-दुःखनिदानत्वात् क्लेशाः। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्म-ख्यातिरविद्याः। योग सू०। पा०२।५॥ नित्यादिचतुष्टयेऽनित्यादिचतुष्टयः-अस्मिता अहङ्कार इत्यर्थः। सुखानुशायी रागः ७ सुखतत्साधनमात्रविष-यकः क्लेशो राग इत्यर्थः। दुःखानुशायी द्वेषः। ८ दुःखे तत्साधने तत्त्वेन गृहीते यः क्रोधः स द्वेषः। स्वरसवाही विदुषोऽपि तथारूढोऽभि-निवेशः। ९॥ विद्वदविदुषोः स्वरसवाहित्वहेतुना यज्जातीयः क्लेशो

भयाख्यः प्रसिद्धोऽस्ति सोऽभिनिवेशः । कर्म = धर्माधर्मौ। विपाकाः कर्मफलानि जन्मायुर्भोगाः आशयस्तदनुगुणं संसारसामान्यम् । तेषां कालत्रयेऽपि स्पर्शो नास्ति सर्वेश्वरे परब्रह्मणि । पराणां चतुर्मुखरुद्रादीनां परम उत्कृष्टः । ईश्वरेश्वरः " तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतं, स कारणं कारणाधिपाधिपः, न तस्य कश्चिज्जनिता न चाधिप, इति श्रुतेः । मत्तः परतरं नान्यत् किञ्चिदस्ति धनजंयेति श्रीमुखवचनाञ्च वुद्धिरविद्या अनात्मन्यात्मवुद्धिर्या अस्वे स्वमिति या मतिः। अविद्यातरुसम्भूतिवीजमेतद् द्विधा स्थितमिति स्मृतेः दृग्दर्शनशक्त्योरेकात्मतैवास्मिता । योग सू०पा०२।६ दृक्शक्तेर्दर्शनशक्तेश्चैकात्मतैव धर्मतश्च स्वरूपतश्चात्यन्तमेकाकारवुद्धिरस्मिता २८८ ।२८९ २९० ।

निर्गुणं निष्फलं शान्तं निरवद्यं निरञ्जनमित्यादिवाक्यानां हेयगुणनिषेधपरत्वमित्याह— किञ्चेति ।

किञ्च निर्गुणवाक्यानामित्थमेव गतिर्वुधैः ।
ज्ञेया हेयनिषेधेन परब्रह्मणि माधवे ॥२९१॥
प्राकृता एव तैर्भूम्नि निषिध्यन्ते गुणा इति ।
नतु कल्याणरूपास्तु दिव्याः स्वाभाविकाश्शुभाः।२९२॥

निर्गुणपदेन प्राकृताःगुणाः निषिध्यन्ते नतु स्वाभाविकाः कल्याणगुणा इत्यर्थः । २९१ २९२ ॥

भगवद्गुणानाह—

ज्ञानशक्तिवलैश्वर्यवीर्य्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥२९३॥

ज्ञानं सर्वदेशकालवस्तुविषयकप्रत्यक्षानुभवरूपम् ।

शक्तिश्चाघटघटनापटीयस्त्वरूपसामर्थ्यम् । वलं विश्वधारणादिशक्तिः । ऐश्वर्यं नियमनशक्तिः । श्रमहेतोरपरिमितत्वेऽपि श्रमशून्यत्वं

तेजः । वीर्य्यम् । परैरनभिभूयमानत्वेसति पराभिभवनसामर्थ्यम् । अशेषतः । अशेषैः स्वविस्तारभूतैर्गुणान्तरैः सह । भगवानिति शब्दघटकमकरादीनामर्थं निरूप्य सम्प्रति नकारस्यार्थमाह—विनाहेयैरिति । गुणादिभिः त्रिगुणतत्कार्यक्लेशादिभिः । निखिलहेयप्रत्यनीकत्वं समस्तकल्याणगुणात्मकत्वमित्यर्थः । एतेन श्रीमद्द्वादशाक्षरमन्त्रे भगवच्छब्दार्थो निरूपितः ॥ २६३ ॥

दर्शितमर्थं प्रपञ्चयति—

**स सर्वभूतप्रकृतिं विकारान् गुणांश्च दोषांश्च मुने व्यतीतः ।**
**अतीतसर्वावरणोऽखिलात्मा तेनाश्रितं यद्भुवनान्तराले ॥२६४॥**
**समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतसर्गः ।**
**इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥२६५॥**

वि० पु० अ०५। अं०६। ८४।

सर्वभूतप्रकृतिरव्यक्तं विकारा महदाद्याः गुणाः सत्त्वाद्याः व्यतीतः । तेभ्यो विलक्षणः । अनेनाचिद्विलक्षणत्वं भगवत उक्त्वा प्रत्यगात्मतोऽपि वैलक्षण्यमाह— अखिलात्मेति । भुवनान्तराले यदस्ति तत्सर्वं तेनास्तृतं च्छन्नं, व्याप्तमिति यावत् । अतीतसर्वावरण इति । बहिरङ्गमायाशक्तिस्तत्कार्यसंसर्गरहित इत्यर्थः ॥ २६४ ॥

समस्तेति । वक्ष्यमाणाः समस्ताः कात्स्न्येन कल्याणगुणाः आत्मा स्वभावो यस्य स तथा स्वशक्त्या लेशेनांशेनोवृतभूतवर्गो येन सः । जगद्धितायावतारकालेष्विच्छया गृहीततत्तत्कार्योचितानेकदेहः । २६५॥

**तेजोवलैश्वर्य्यमहाववोधः स्ववीर्यशक्त्यादिगुणैकराशिः ।**
**परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥२६६॥**

वि० पु० अ० ५ । अं० ६ ' ८५ ।

कल्याणगुणानेवाह— तेज इति । श्रमहेतोरपरिमितत्वेऽपि श्रम

शून्यत्वं तेजः। वलं विश्वधारणादिशक्तिः। ऐश्वर्य्यं नियमनशक्तिः। महाववोधः! सर्वदेशकालविषयकप्रत्यक्षानुभवरूपः। वीर्यम्। परैरनभिभूयमानत्वे सति पराभिभवनसामर्थ्यम्। शक्तिः, अघटघटनापटीयस्त्वरूपसामर्थ्यम्। भगवानितिशब्दघटकनकारस्यार्थमपि विस्तरेणाह—न यत्रेति। क्लेशाः= अविद्यास्मितादयः। आदिपदेन कर्मविपाकाशया उक्ताः। आशयो वासना। २९६ ॥

**स ईश्वरोव्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः।**
**सर्वेश्वरःसर्वगःसर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥ २९७॥**

वि०अ० ।६। अं०८३॥

व्यष्टिःसङ्कर्षणादिरूपः। समष्टिर्वासुदेवः॥ पररूपेण व्यक्तव्यूहादिरूपेण व्यक्तरूपः। सर्वावस्थचिदचित्स्वरूपत्वेऽपि सर्वेश्वरः न तु परवशः। सर्वदृक् = "तच्चक्षुर्देवहितम्"। चक्षुर्देवानामुत त्रैलोक्यस्यैकचक्षुषः" इतिवत्। यद्वा "यः सर्वज्ञस्सर्वविदितिवत् सर्वं वेत्ति सर्वप्रकारेण वेत्तीति" समस्तशक्तिः = स परःसर्वशक्तीनां समस्ताशक्तयश्चेति। २९७ ॥

**इत्याद्या ऋषिसम्प्रोक्ता अनन्ताः श्रीहरेर्गुणाः।**
**परास्य शक्तिरित्याद्याः श्रुतयोऽपि वदन्ति हि ॥२९८॥**

ऋषिसम्प्रोक्ताः = श्रीपराशरेण श्रीविष्णुपुराणे षष्ठांऽशेपञ्चमेऽध्याये उक्ताः। परास्य शक्तिर्विविधैवश्रूयते, स्वाभाविकी ज्ञानवलक्रिया चेति। अस्यार्थः, अस्य परब्रह्मणः शक्तिः परा स्वरूपविलक्षणा। विविधा अनन्ताचिन्त्यप्रकारिका श्रूयते चेत्यन्यप्रमाणनिरपेक्षेत्यर्थः। अनिर्वचनीयत्वमिथ्यात्वोपाधिकत्वादिशब्दप्रयोक्तॄणां मुखं धूलीकरोति—स्वाभाविकीति। अनाद्यनन्तेतिस्वरूपवन्नित्या, न केवलंशक्तेरेव तत्त्वंज्ञानक्रियागुणानामपीत्याह-ज्ञानवलक्रिया चेति। ज्ञानवलाभ्यां सहिता क्रियाज्ञानवलक्रिया चेति चकारःसर्वेषामपि भगवतो गुणकर्मादीनामाकर्षणार्थः। २९८ ॥

ज्ञानादयश्च सौशील्यादयो मुख्यगुणा मताः ।
आद्यास्तु षड् जगत्सृष्टयाद्युपयिकाः प्रकीर्तिताः ॥२९९॥

ज्ञानशक्तिबलैश्वर्यतेजोवीर्यादयः षड्गुणा जगत्सृष्ट्याद्युपकारका इत्याह— ज्ञानादय इति । ज्ञानं सर्वदेशकालवस्तुविषयकप्रत्यक्षानुभवरूपम् । सौशील्यं नाम जात्यादिमहत्त्वमनपेक्ष्यामन्दैरप्यमायया संश्लेषभाक्त्वम् । २९९ ॥

अपरे श्रीमुकुन्दस्याश्रयणे ह्युपयोगिनः ।
आश्रितरक्षणे चैव द्वादशसम्मता हरेः ॥३०० ॥

सौशील्यवात्सल्यार्जवसौहार्दसर्वशरण्यत्वसौम्यकरुणास्थिरत्व-धैर्यदयामाधुर्य्यमार्दवादयः, एते द्वादशगुणाः भगवदाश्रयेण आश्रित-रक्षणे चोपयोगिन इत्याह—अपर इति । ३०० ॥

जगत्कारणता शास्त्रयोनित्वं च नियन्तृता ।
सर्वाधिष्ठातृतासर्वकर्मफलप्रदातृता ॥ ३०१ ॥
भोक्तृत्वं यज्ञतपसां मोक्षप्रदातृतादयः ।
धर्माः कल्याणरूपाश्च वेदान्ते प्रतिपादिताः ॥ ३०२ ॥
असंख्येया हि विद्यन्ते परे ब्रह्मणि माधवे ।
तानि वेदान्तवाक्यानि मंजूषायां ह्यनेकशः ॥ ३०३ ॥
उदाहृतानि चाचार्यैः श्रीपुरुषोत्तमाभिधैः ।
एष्टव्यानि च तत्रेह विस्तरादुपरम्यते ॥ ३०४ ॥
स्वरूपेण गुणैश्चापि बृहत्तमं हि वस्तुयत् ।
ब्रह्मशब्दस्य तद्वाच्यमिति सिद्धं प्रमाणतः ॥ ३०५ ॥

कल्याणधर्मानाह—जगदिति । "जन्माद्यस्य यतः" ब्र०सू०१

२। अस्य विश्वस्य सृष्टिस्थितिलया यस्मात्सर्वेश्वराद्भवन्तीति सूत्रार्थः। शास्त्रयोनित्वात्। १। १। ३। शास्त्रं वेदः योनिः कारणं ज्ञापकं प्रमाणं यस्मिंस्तच्छास्त्रयोनि तस्यभावस्तत्त्वम्। तथाच वेदैकप्रमाणकत्वम्। नियन्तृता = सर्वजगन्नियमनकर्तृत्वम्। सर्वेति। सर्वस्य चिदचिद्वर्गस्याधिष्ठाता। "यःकारणानि निखिलानि कालात्मयुक्तान्यधितिष्ठत्येकः" इति श्वेताश्वतरे। यश्चैको निखिलानि सर्वाणि कारणानि तानि पूर्वं विकल्पितानि कालात्मयुक्तानि कालप्रभृत्यात्मपर्य्यन्तानि, अधितिष्ठति, सर्वकारणकारणतया सर्वाधिष्ठातृतया सर्वनियन्तृतया सर्वाधारतया सर्वव्यापकतया च सर्वंचिदचिद्वर्गमधिष्ठाय तिष्ठति वर्तते' इतिश्रुत्यर्थः। सर्वकर्मेति। फलमत उपपत्तेः। ब्र० सू०। ३। २ ३८। शास्त्रीयमैहिकामुष्मिकं सर्वं फलमतः परमात्मन एव भवितुमर्हति। कुतः। उपपत्तेः। कर्मणां हि क्षणिकत्वात्कालान्तरभाविफलं दातुमसमर्थत्वात्। मोक्षेति। "तन्निष्ठस्य मोक्षोपदेशात्" ब्र०सू०। १। १। ७॥ तस्मिन् सदादिशब्दाभिधेये परमात्मनि निष्ठा निदिध्यासनापरपर्य्यायलक्षणा यस्य विदुषःस तन्निष्ठस्तस्य मोक्षोपदेशादित्यर्थः। वेदान्तवाक्यानीति। "विवक्षितगुणोपपत्तेश्च" ब्र०सू० परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति, सत्यकामः सत्यसङ्कल्पः सर्वं ल्लोकानीशत ईशनीभिः सर्वस्य शरणं सुहृत् विष्णोर्नु कं वीर्य्याणि प्रावोचत्, यःपार्थिवानि विममे रजांसि, ज्ञानशक्तिबलैश्वर्य्यतेजोवीर्य्याण्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः। एवमादीनि बहूनि वाक्यानि पठितानि ब्रह्मशब्दार्थं व्याचष्टे—स्वरूपेणेति प्रमाणत इति। बृंहयति बृहयति तस्मादुच्यते परंब्रह्मेति, श्रुतेः। एष प्रकृतिरव्यक्तकर्त्ता चैव सनातनः परश्च सर्वभूतेभ्यस्तस्माच्छ्रुद्धतमोऽच्युतः। बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेत्यादिस्मृतेश्चोक्तार्थे मानं ज्ञेयम् ॥३०१॥ ३०२ ॥३०३ ॥३०४ ॥३०५॥

**स एवं बृहत्तमः शास्त्रे कृष्ण एव निरूपितः।**
**स एव सर्वतो ध्येयो जिज्ञास्योऽपि मुमुक्षुभिः ॥ ३०६ ॥**

व्यूहावताररूपेण वहुरूपः स उच्यते ।
श्रीपुरुषोत्तमो विश्वसृष्ट्याद्यर्थं स्वापेक्षया ॥ ३०७ ॥
तद्विद्योपासनार्थं च चतुर्व्यूहो व्यजायत ।
तत्राद्यो वासुदेवो वै संकर्षणो द्वितीयकः ॥ ३०८ ॥
प्रद्युम्नश्चतृतीयः स्यादनिरुद्धश्चतुर्थकः ।
अन्ये च द्वादशाः प्रोक्ता व्यूहा वै केशवादयः ॥३०९॥
द्वादशैवोर्द्ध्वपुंड्राभिधायकमंत्रदेवता ।
धर्मस्य स्थापनार्थं चाधर्मोपशमनाय वै ॥ ३१० ॥
स्वीयानां कामपूर्त्यर्थं विविधैर्विग्रहैर्विभुः ।

निरतिशयवृहत्तमः भगवच्छब्दवाच्यः पुरुषोत्तमो रमाकान्तः श्रीकृष्णस्तस्यैव जिज्ञासा मुमुक्षुभिर्विधेया, इत्याह—एवमिति । व्यूहाङ्गिनः श्रीकृष्णस्य वहुरूपत्वमाह—व्यूहावतारेणेति । व्यूहशब्दार्थं निर्वक्ति—विश्वसृष्ट्याद्यर्थमिति । तद्विद्येति । व्यूहोपासनार्थं व्यूहात्मनाऽवस्थितो भवतीत्यर्थः । व्यूहात्मानं चतुर्धा वै वासुदेवादिमूर्त्तिभिः । सृष्ट्यादीनि करोत्येषः विश्रुतात्मा जनार्दन इति वचनमुक्तार्थे प्रमाणतयाऽनुसन्धेयम् । तस्य चातुर्विध्यं दर्शयति-तत्रेति । तेषु मध्य इत्यर्थः । केशवादयोऽपि द्वादशव्यूहमूर्तय इत्याह—अन्ये चेति ।३०६ ।३०७ । ३०८ । ३०९ । ३१० ॥

अवतार- शब्दस्यार्थंव्याचष्टे –

आविर्भवति लीलार्थमवतारः स उच्यते ।
अवतारास्त्रिधा प्रोक्ता गुणपुरुषादिभेदतः ॥३११ ॥
गुणानां च नियन्तृत्वात्तदभिमानिदैवतैः ।
कलादिभिश्च सृष्ट्यादिकर्ता गुणावतारकः ॥ ३१२ ॥

रजोगुण नियन्ता वै तन्मात्रोपाधिकश्च सः ।
रजोभिमानिदेवेन कालदक्षादिद्वारतः ॥ ३१३ ॥
जगत्स्रष्टाथ सत्त्वस्य स्वयं विष्णुर्नियामकः ।
तदुपाधिश्च सत्वादिःकालद्वारेणपालकः ॥ ३१४ ॥
तमोगुणनियन्ता च तमोधिष्ठातृरुद्रतः ।
कालादिद्वारतश्चापि संहर्ता च तृतीयकः ॥ ३१५ ॥
गुणावतार इत्युक्तस्त्रिविधो गुणभेदतः ।
पुरुषाख्यावतारोऽपि त्रिविधः कथ्यतेऽधुना ॥ ३१६ ॥
महत्स्रष्टाथ विज्ञेयः प्रकृतेश्च नियामकः ।
कारणार्णवशायी च पुरुषः प्रथमोऽत्र वै ॥ ३१७ ॥

गुणावतार-पुरुषावतार लीलावतारभेदेनावतारस्य त्रै विध्यमाह-गुणेति । गुणावतारस्य लक्षणं निर्वक्ति-गुणानामिति । गुणावतारस्य चतुर्मुखादिद्वारेण जगत्स्रष्टत्वादिरूपकार्य्यभेदेन त्रैविध्यमाह- रजो-गुण इति । गुणावतारस्य त्रैविध्यमाह—गुणावतार इति । पुरुषावतारं विभजते । पुरुषावतार इति । प्रथमपुरुषस्य कार्य्यमाह - महदिति । “प्रथमन्तु महत्स्रष्टृ द्वितीयं त्वण्डसंस्थितम् तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते” इति वचनमत्रानुसन्धेयम् । तथा चोपाधिभेदात् तत्त-दवस्थापन्नस्तत्तत्संज्ञां भजत इत्यर्थः । ३११,३१२३१३,३१४,३१५,३१६॥ ॥ ३१७॥

समष्टयन्तर्नियन्ताद्वितीयोगर्भोदकेशयः ।
व्यष्टेर्नियामकः क्षीरोदधिशायी तृतीयकः ॥ ३१८ ॥

अथ लीलावतारोऽपि द्विविधः परिकीर्तितः ।
आवेशाख्यावतारः स्वरूपावतार एव च ॥ ३१९ ॥

तत्रावेशो द्विधा स्वांशावेश आद्यः प्रकीर्तितः ।
द्वितीयश्चापि शक्त्यंशावेशो जीवान्तरं विना ॥ ३२० ॥

साक्षात्स्वांशेन चावेशः प्राकृते विग्रहे ऽपि यः ।
स आद्यो नरनारायणादिरूपः प्रकीर्तितः ॥ ३२१ ॥

जीवादिव्यवधानेनावेशः शक्त्यंशमात्रतः ।
शक्त्यंशावेश इत्युक्तस्ततस्तत्कार्य्यसाधकः ॥३२२॥

स तारतम्यभेदेन प्रभवो विभवोऽपि च ।
आद्यो धन्वन्तरीयो वै जामदग्न्यश्च तद्विधः ॥३२३॥

ऋषभः कपिलश्चैव सनकादिश्च नारदः ।
व्यासश्चैते सदाचार्य्यैर्विभवाः परिकीर्तिताः ॥३२४॥

लीलावतारं विभजते-अथेति । पुरुषावतारानन्तर्य्यमथशब्दार्थः ॥ आवेशस्य द्वैविध्यमाह-तत्रेति । तयोर्मध्य इत्यर्थः । जीवव्यवधानाभावेन साक्षात्स्वांशेन प्राकृतविग्रहादावेशः स्वांशावतार इत्याह—जीवान्तर-मिति । स आद्यः=स्वांशावतारः। तमुदाहरति-नरेति । शक्त्यंशावतारस्य स्वरूपं निर्दिशति-जीवेति । शक्त्यंशमात्रेणाविश्य जीवादि व्यवहितस्त-त्कार्य्यसाधकः शक्त्यंशावेश इति तदर्थः । शक्त्यंशावेशस्य तारतम्य-भेदात् प्रभवविभवसंज्ञको भवतीत्याह—सेति । सः=शक्त्यंशावेशः । आद्यमुदाहरति—धन्वन्तरीति । विभवानुदाहरति । ऋषभ इति । ३१८ । ३१९ । ३२० । ३२१ । ३२२ । ३२३ । ३२४ ॥

तेनैव सच्चिदानन्दस्वरूपेणात्मनो विभोः ।
आविर्भावोऽवतारः स स्वरूपाख्योऽभिधीयते ॥३२५॥
दीपाद्दीपान्तरो यद्वदभिन्नगुणशक्तिकः ।
स्वस्वरूपावतारोऽपि द्विविधः परिकीर्तितः ॥३२६॥
पूर्ण एव स्वरूपेण तत्तत्कार्यानुसारतः ।
स्वीयाल्पगुणशक्त्याविष्करणादंश उच्यते ॥३२७॥
तत्र वाराहरूपश्च तथा मत्स्यश्च वामनः ।
हयग्रीवश्च हंसादिरूपो ज्ञेयो हि तद्विधः ॥ ३२८ ॥
प्रकटीकरणात् पूर्णशक्त्यादेः पूर्ण उच्यते ।
श्रीनृसिंहस्तथा दाशरथीरामश्च तद्विधः ॥ ३२९ ॥
श्रीकृष्णश्चेति वै पूर्णास्त्रयः प्रोक्ताः विवेकिभिः ।
तस्मात्कृष्णः परं ब्रह्म नित्योभयविभूतिमान् ॥३३०॥
ब्रह्मरुद्रमहेन्द्रादिकिरीटार्चितपादुकः ।
सर्ववेदान्तवेद्यश्च सर्वाधारो गुरुर्हरिः ॥ ३३१ ॥

स्वरूपावतारं निर्वक्ति—तेनैवैति । स्वरूपावतारस्यांशपूर्णरूपेण द्वैविध्यमाह—स्वस्वरूपेति। पूर्णोऽपि, अल्पगुणशक्त्याविष्करणादंश इत्याह—पूर्णइति । अंशावतारानुदाहरति—तत्रेति । तेषु मध्य इत्यर्थः । तद्विधः = अंशविधः । पूर्णावतारं दर्शयति-प्रकटीति । पूर्णशक्त्यादिव्यक्तीकरणात् पूर्णा इत्यर्थः । तेषां नाम निर्दिशति—श्रीनृसिंह इति । दाशरथीति विशेषणेन भार्गवबलरामौ व्यावर्त्यौ । तस्मात् = पूर्णत्वात् । उभयविभूतिमान् = लीलाविभूतिनित्यविभूतिमान् । श्रीपुरुषोत्तमस्य-ब्रह्मादिभ्योवैशिष्ट्यमाह— ब्रह्मेति । तत्र प्रमाणमाह—सर्वेति ।

सर्ववेदशिरोभागोपनिषद्भिर्वेद्यः । "तन्त्वौपनिषदं पुरुषं पृच्छामी"त्यादि-श्रुत्यन्तरात्। "नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती" सर्वैश्च वेदैरहमेव वेद्य, इत्यादिस्मृतिभ्यश्च । तस्य सर्वाश्रयत्वमाह—सर्वाधार इति। एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्व-भूताधिवासः साक्षी चेताः केवलो निर्गुणश्चेति श्रुतेः। गुरुरिति। ब्रह्मादीनां स्वस्वरूपगुणशक्तियाथात्म्यप्रतिपादकतयोपदेष्टृत्वेन हितकर्त्ता-इति तदर्थः। हरिशब्दं व्याचष्टे। ३२५ ।३२६।३२७।३२८।३२९।३३०।३३१

भक्तपापानि तद्द्वेष्टॄन् हरत्येतज्जगद्यतः ।
गोपिकानां मनोहारी तस्मात्कृष्णो हरिः स्मृतः ॥३३२॥
ब्रह्मरुद्रादयस्तस्य कार्यभूता उपासकाः ।
तदुपदेश्यरूपाश्च श्रुत्यादिष्विति संश्रुतम् ॥ ३३३ ॥
मोक्षदानेऽसमर्थाश्च हरिवंशे तथोक्तितः ।
मोक्षार्थिने स्वभक्ताय घंटाकर्णाय शम्भुना ॥ ३३४ ॥
निर्दिष्टो विष्णुरेवैकोमोक्षदाने ह्यसंशयम् ।
श्रीकृष्णाराधनञ्चैवोपदिष्टं शूलपाणिना ॥ ३३५ ॥
तद्दत्तैश्वर्यवन्तोऽपि तदधीनाः सदैव ते ।
कर्मफलार्थिनस्तस्य भोक्तारः कालयन्त्रिताः ॥३३६॥
तच्छक्तिलेशयोगाच्च सृष्टिसंहारकारकाः ।
अतएवेश्वरत्वेन कुत्रचित् प्रतिपादिताः ॥ ३३७ ॥
नियम्या एव सच्छास्त्रै र्विवेकिनिर्णयस्त्वयम् ।
तस्माद्भगवतः कृष्णादतिन्यूना हि सम्मताः ॥३३८॥

हरति भक्तपापानीति हरिः भक्तद्वेषकर्तॄन् हरति। निखिल-ब्रह्मादिहर्तृत्वेन वा हरिः। श्रीगोपीजनमनोहारित्वाद्वाहरिरित्यर्थः ।

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः" ब्रह्माणमिन्द्रं रुद्रञ्च यमं वरुणमेवच । प्रसह्य हरते यस्मात् तस्माद्धरिरितीर्य्यते" इतिवचनमनुसन्धेयम् । श्रीकृष्णस्य चतुर्मुखरुद्रादिभ्यः परमतत्त्वमाह—ब्रह्मैति । कार्य्यभूताः = तत्स्रष्टाः । प्रजापतिञ्च रुद्रञ्चाप्यहमेव सृजामि वै, तौ हि मां नच जानीतो मम मायाविमोहितौ" इतिमोक्षधर्मवचनात् । तदुपदेश्येति श्रीकृष्णोपदेश्यः । उक्तार्थं प्रमाणेन द्रढयति—श्रुत्यादिभिः योब्रह्माणं विदधाति पूर्वं यो वै विद्यास्तस्मै गोपायतिस्म कृष्णः । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजेत्" इतिश्रुतिषु तथात्वमुदिपष्टम् । श्रीपुरुषोत्तमस्यैव मोक्षप्रदातृत्वं नत्वन्येषां चतुर्मुखरुद्रादीनामित्याह—मोक्षदान इति । मोक्षदानार्हत्वं शिवोपदिष्टं स्वानुभूतञ्चाह घण्टाकर्णो हरिवंशे कैलाशयात्रायाम् । अहं कैलाशनिलयमासाद्य वृषभध्वजम् । आराध्य तं महादेव मस्तुवं सततं शिवम् । ततः प्रसन्नोमामाह वृणीष्वेति वरं हरः । ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ । मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः । तस्माद् गत्वा च बदरीं तत्राराध्य जनार्दनम् । मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे इत्यादि । तद्दत्तैश्वर्यवन्तः = श्रीपुरुषोत्तमदत्तैश्वर्य्यवन्तः । तदधीनाः भगवदायत्तस्वरूपस्थितिप्रवृत्तिकाः । ते = चतुर्मुखप्रभृतयः । तस्य = कर्मफलस्य । तच्छक्तिलेशयोगात् = भगवच्छक्तिलेशयोगात् । अत एव = सृष्टिसंहारकारकत्वादेव । उक्तार्थं शास्त्रप्रमाणेन द्रढयति-सच्छास्त्रैरिति । चतुर्मुखादिपरत्व तपआदिकर्मफलप्रदत्वमोक्षप्रदातृत्वं श्रीपुरुषोत्तमस्यैव नान्यस्येति निगमयति—तस्मादिति ।३३२ ।३३३ । ३३४। ३३५।३३६।३३७।३३८॥

**मुख्यकारणमेवास्य विश्वस्य यः प्रकीर्तितः ।**
**मुमुक्षुभिस्तु जिज्ञास्यो ध्येयः प्राप्यः स एव हि ॥३३९॥**

इत्येवं सूत्रकारस्य कृष्णद्वैपायनस्य वै।
शारीरकादिवेदान्तशास्त्रे च भारतादिषु॥ ३४०॥
निर्णयो विद्यते त्वद्धा पुराणे सात्त्विके तथा।
एवंविधस्तु भगवान् कृष्ण एव निरूप्यते॥ ३४१॥
श्रुतिस्मृत्यादिवाक्यैरेवाचार्य्यैर्निरूपणात्।

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्ति तद्ब्रह्म तद्विजिज्ञासस्व जन्माद्यस्य यतः ब्र०सू० १। १। २। स कारणं कारणाधिपाधिपः न यस्य कश्चिज्जनिता न चाधिपः स विश्वकृद्विश्वविदात्मयोनिः संसारबन्धस्थितिमोक्षहेतुः। नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते एको ह वै नारायण आसीन्न ब्रह्मा नेशानः तस्य ध्यानान्तःस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गोपायतिस्म कृष्णः।

उक्तार्थं सूत्रकारसम्मत्या द्रढयति— मुख्येति। योहरिः श्रीकृष्णो विश्वमुख्यकारणत्वेन निर्धारितः स एव ध्येयः मुमुक्षुभिः जिज्ञास्यः प्राप्यश्च। शारीरकेति। शरीरे भवाः शारीराः प्रत्यगात्मानस्तेषां क आनन्दो मोक्षलक्षणो यस्मात् स शारीरकस्तस्य प्रतिपादकं यद्वेदान्तशास्त्रं तस्मिन् श्रुतिमुदाहरति—यत इति। यतो यस्माच्छ्रीपुरुषोत्तमादिमानि महदादितृणान्तानि भूतानि जायन्ते इति सृष्टिरुक्ता। अभिसम्विशन्तीति मोक्ष उक्तस्तद्ब्रह्मेति ज्ञात्वा तद्ब्रह्म विजिज्ञासस्व जिज्ञासां कुर्वित्यर्थः। सूत्रेणाप्युक्तार्थं द्रढयति—जन्मेति। यतः सर्वेश्वरात्सर्वज्ञात्सर्वशक्तेः परमकारणात् सर्वनियन्तुर्भगवतः श्रीपु-

रुषोत्तमादस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृभोग्य-संयुक्तस्य नियतदेशकालफलोपभोगाश्रयस्य तर्कागोचररचनस्य जन्म-स्थितिलयमोक्षाः प्रवर्त्तन्ते तदेव ब्रह्म जिज्ञास्यमिति सूत्रार्थः । स सर्वस्य कारणम् अन्येषां कारणानां तेज आदीनां अधिपानां कालादीनाञ्चा-धिपः स्वामी आकाशादीनां कारणत्वेऽप्यन्यकार्य्यत्वं सुप्रसिद्धं तथात्रापि स्यादत आह—नचेति । परमते परमाणुप्रधानादीनां जन्यत्वाभावेपि पर-नियम्यत्वस्वीकारात्तन्निवृत्तये नचाधिप इति । अस्य परमात्मनः कश्चि-दपि जनिता जनयिता च नास्ति, अधिपः स्वामी च नास्ति । स विश्वकृ-दिति। स प्रकृतः श्रीभगवान् विश्वस्य सर्वस्य कर्त्ता संहर्ताच विश्ववित्= विश्वं विन्दतीति विश्वं सर्वं व्याप्तः । आत्मनां देवमनुष्यादिदेहानां योनिः कारणम् । संसारेति । संसारान्मोक्षे तत्र स्थितौ तेन बन्धे च हेतुः बन्धको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परं ब्रह्म विष्णुरेव सनातन इत्युपबृंहणश्रुतेः । यो ब्रह्माणमिति । यः कृष्णः । पूर्वं प्रथम सृष्टि काले ब्रह्माणम्=चतुर्मुखम् । विदधाति=उत्पादयति । यो वै=य एव कृष्णः । तस्मै=तदर्थम् । विद्याः वेदान् प्रलयाम्भोधिजले मत्स्या-दिरूपेण गोपायतिस्म उपदिदेश वा । ३३९ । ३४० । ३४१ ॥

**तमीश्वराणां परमं महेश्वरं तं देवतानाञ्च परमञ्च दैवतम् ।**
**पतिं पतीनां परमं परस्तात् सर्वे वेदा यत्पदमामनन्ति ॥३४२॥**
**तन्त्वौपनिषदं पुरुषं पृच्छामि तस्मिल्लोका श्रिताः सर्वे तदु ।**
**नात्येति कश्चन एको वशी सर्वगः कृष्ण ईड्यः" ॥ ३४३ ॥**

**तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्तं-**
**रसयेत्तं भजेत् इत्याद्याः श्रुतयः ॥ ३४४ ॥**
**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**मत्तः परतरं नान्यत् किञ्चिदस्ति धनंजयः ॥ ३४५ ॥**

तं प्रकृतं भगवन्तं श्रीकृष्णमीश्वराणां जगदुत्पत्त्यादिहेतुभूतानां=चतुर्मुखविष्णुशिवानां परमं महेश्वरम्, उत्कृष्टं महान्तं गरीयांसमीश्वरं नियन्तारं च तद्दत्तैश्वर्य्यवत्त्वात्। देवतानामिन्द्रादीनां परममुत्कृष्टम्। पतीनां तेषामेव सर्वस्य जगतः पालने नियुक्तानां परममुत्कृष्टं पतिं पालकं स्वामिनं परमात्मन एव स्वतन्त्रतया सर्वपालकत्वात्। परस्तात् प्रकृतेभ्यश्चतुर्मुखादिभ्यःपरं भिन्नं देवमित्यर्थः। ब्रह्मणि प्रमाणं दर्शयितु माह—सर्वेति। पद्यते गम्यते, इति व्युत्पत्त्या पदशब्दः प्राप्यस्वरूपवाची यत्स्वरूपं सर्वे वेदाः साक्षात्परम्परया प्रतिपादयन्तीत्यर्थः। तन्त्विति। तम्=सर्वशास्त्रसिद्धम्। औपनिषदम्=उपनिषत्प्रतिपाद्यम्। पुरुषम्=पूर्णं पुरुषोत्तमम्। पृच्छामीत्यनेन वेदवेद्यस्यैव जिज्ञास्यत्वं सूचितम्। तस्मिन्निति। तस्मिन् मूलभूते सर्वकारणे ब्रह्मणि सर्वे लोकाः भूरादयः श्रिताः स्थिताः तद्ब्रह्म कश्चन कदापि नात्येति नातिक्रामति सर्वकारणत्वादित्यर्थः। एक इति। एकः मुख्यः साम्यातिशयशून्यः। स्वयं भगवत्त्वात् "कृष्णस्तु भगवान्स्वयमित्युक्तेः। अनन्याधीनभगवत्त्वमिति तदर्थः। वशी=सर्वेषां प्रकृतिकालकर्मब्रह्मादीनां वशयिता। यतः सर्वगः सर्वज्ञाता सर्वव्यापकः। सर्वप्राप्यश्चेत्यर्थः। कृष्णं=सर्वाकर्षकं, अत एव, ईड्यः सर्वस्तुत्यः। अतः सर्वोत्कृष्टत्वात् श्रीकृष्ण एव यजनीयो ध्येयो रसनीयो भजनीयश्चेत्युपसंहरतिस्म—तस्मादिति। उक्तार्थं श्रीमुखवचनेनापि द्रढयति—अहं सर्वस्येति। अहम्=जिज्ञास्यभूतजगज्जन्मादिलक्षणलक्षितपरब्रह्मस्वरूपः। सर्वस्य ब्रह्मादिस्थावरान्तस्य जगतः प्रभवः=उत्पत्तिकारणम्। मत्त एवास्य सर्वं देवमनुष्यादिलोकगमनागमनं वृद्धिह्रासादिकं प्रवर्तते इत्येवं मत्वा बुधाः यथावदवबोधयुक्ताः भावसमन्विताः प्रवृद्धप्रेमप्रवाहा मां निरतिशयप्रीतिविषयं भजते। ३४२। ३४३। ३४४। ३४५॥

**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।**
**वेदैश्च सर्वैरहमेववेद्यो वेदान्तकृद्वेदविदेव चाहम्॥३४६॥**

बुद्धिर्मनोमहद्वायुस्तेजोऽम्भः खं मही च या ।
चतुर्विधश्च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ ३४७ ॥

सर्वस्याश्रयोऽहमेवेत्याह—मयीति । सर्वमिदम् = चिज्जड-जातं जगत् मयि सर्वस्यात्मतयाऽवस्थिते प्रोतम् = आश्रितम् । तत्र दृष्टान्त; सूत्रे मणिगणा इवेति । यथा मणीनां स्थितिप्रवृत्ती सूत्राधीने तथा सर्वस्य स्थितिप्रवृत्ती मदधीने । वेदैश्चेति । इन्द्राग्निसूर्यमित्रावरुण-वाय्वादिप्रतिपादकैरपि वेदैरहमेव वेद्यः मम सर्वात्मत्वात् । वेदान्त-कृदिति । वेदानां नानाविधार्थप्रतिपादनपराणां परस्परं विरुद्धार्थकतया संशये जाते अन्तकृत् = अविरोधप्रकारेण निर्णयकर्ता । वेदविच्चाहमेव सर्ववेदाविरुद्धार्थविदहमेवेत्यर्थः । स्मृतिमुखेनापि । श्रीपुरुषो त्तमस्य सर्वाश्रयत्वं निर्धारयति—बुद्धिरिति । ३४६ । ३४७ ॥

नारायणः परो देवस्तस्माज्जातश्चतुर्मुखः ।
तस्माद्रुद्रोऽभवद्देवः स च सर्वज्ञतां गतः ॥ ३४८ ॥
ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा ।
स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः ॥ ३४९ ॥
महादेवः सर्वयज्ञे महात्मा हुत्वात्मानं देवदेवो बभूव ।
विश्वाँल्लोकान्प्राप्य विष्टभ्य कीर्त्या विराजते द्युतिमान्कृत्तिवासाः ॥
प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै ।
तौ हि मां न विजानीतो मम माया विमोहितौ ॥३५१॥
कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् ॥३५२॥
बहवो ज्ञानतपसा पूता मद्भावमागताः ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ ३५३ ॥

सर्वेभ्यःपरतमात्पुरुषोत्तमात् चतुर्मुखादीनामुत्पत्तिरिति स्मृति-प्रमाणेन द्रढयति—नारायण इति। चतुर्मुखादीनां पारमेष्ठ्यादिपद-प्राप्तिः श्रीपुरुषोत्तमस्याराधनादेवेत्याह—ब्रह्मादय 'इति'। बहव इति। बहवः=भक्ताः। ज्ञानतपसा=मज्जन्मकर्मविषयकं ज्ञानमेव तपः सर्व-कर्मभर्जकं "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति-वचनात्। तेन 'पूताः' निरस्ता ज्ञानतत्कार्यशुभाशुभवासनाः 'सन्तो' मम यो भावः=अपरिच्छिन्नज्ञानानन्दवत्त्वे सत्यप्राकृतप्रकाशानन्द-विग्रहवत्त्वमागताः=प्राप्ताः स्वरूपभेदे सति सर्वं ह पश्यः 'पश्यती' तिश्रुतौ सार्वज्ञ्ययोगोक्तेः। सार्वज्ञ्यादिधर्माविर्भावेन विग्रहसाम्येन चाभेदं तादात्म्यलक्षणं भेदाभेदं प्राप्ताः "भेदसहिष्णुरभेदस्तादात्म्यमि" तिपतञ्जल्युक्ततादात्म्यलक्षणमनुसन्धेयम्। भावपदञ्च स्वयमेव व्या-ख्यातं श्रीमुखेनेत्याशयेनाह—इदमिति। इदं=वक्ष्यमाणं ज्ञानमुपाश्रित्य अनुष्ठाय मम साधर्म्यमागता इत्यर्थः। अत्र साधर्म्यवचनेन मुक्तौ स्वरू-पैक्यवादः केवलभेदवादो बहुवचनेनात्मैक्यवादश्च स्पष्टं निरस्तः।
।३४८।३४९।३५०।३५१।३५२।३५३॥

उक्तार्थमाद्याचार्य्यवचसा द्रढयति—

**नान्यागतिः समादिष्टा श्रीकृष्णचरणादृते।**
**आचार्यैर्दशश्लोक्यां नियमानन्दसंज्ञकैः॥**
**इत्यादीनि प्रमाणानि ज्ञातव्यानि मुमुक्षुभिः ॥३५४॥**

श्रीकृष्णपादारविन्दादन्या गतिः क्षेत्रज्ञानां न संदृश्यते। गम्यत इति गतिः प्राप्योऽपि श्रीपुरुषोत्तम एवेत्यर्थः। अस्याधिकव्याख्यानन्तु वेदान्तरत्नमञ्जूषायां द्रष्टव्यम्। ३५४॥

**यानि तु ब्रह्मणे ज्ञानाविषयाणीति तानि वै।**
**वाक्यानि तस्य चेयत्तानिषेधगोचराणि हि ॥३५५॥**

अन्यथा ब्रह्मणो ऽज्ञाने मुक्तिरेव कथं भवेत् ।
वाङ्मनसोर्निषेधश्च यो ब्रह्मविषयोऽस्ति वै ॥३५६॥
प्राकृताशुद्धयोरेव स युक्तस्तत्त्वदर्शिभिः ।
अन्यथा वाक्यशेषे च विद्वत्त्वोक्तिर्न सम्भवेत् ॥३५७॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानतामिति वचनेन ब्रह्मणोऽज्ञानाविषयत्व-प्रतिपादनात् कथं ब्रह्मविषयकज्ञानान्मुक्तिरित्याशङ्क्य समाधत्ते-यानीति । नह्युक्तवचनेन ब्रह्मणो ज्ञानविषयत्वं निषिद्ध्यते, किंत्वियत्ता-वच्छिन्नविषयकत्वम् । "प्रकृत्यैतावत्त्वं हि प्रषेधति ततो ब्रवीति च भूयः ब्र० ३।२।२१॥ तस्य = ब्रह्मणः । ९६॥ विपक्षे बाधकतर्कमु-पन्यस्यति । अन्यथेति । ब्रह्मणो ज्ञानाविषयत्व इत्यर्थः । ब्रह्मणो ज्ञा-नाभावेऽनिर्मोक्षप्रसङ्ग इति भावः । यतो वाचो निवर्त्तन्त अप्राप्य मनसा सहेति श्रुत्या ब्रह्मणो वाङ्मनसोरगोचरत्वाभिधानात्कथं ब्रह्म-विषयकज्ञानप्रतिपत्तिरिति शङ्कायास्समाधानमाह—वाङ्मनसोरिति । यतो वाच इत्यादौ वाक्शब्दस्य मनश्शब्दस्य च लौकिकपरत्वात् तयोर-गोचरत्वं । ब्रह्मणो निषिद्ध्यते,नत्वाप्राकृतवचनागोचरत्वमित्याशयेनाह—वाङ्मनसोरिति । यो ब्रह्मविषयो निषेधोऽस्ति स निषेध प्राकृताशुद्धयोः वाङ्मनसोरेव युक्त इति तत्त्वदर्शिभिः प्रतिपादितमितिशेष इति योजना। यतो वाचो निवर्त्तन्त इति श्रुत्या ब्रह्मणो यत् वाङ्मनोऽगोचरत्वमभिहितं तत् प्राकृतमनसा प्राकृतवचसा ब्रह्म गृहीतुं न शक्यं किन्तु शुद्धमनसा दिव्यवचसा ग्राह्यमित्येतत्परमित्यर्थः । विपक्षे बाधकतर्कमुपन्यस्यति—अन्यथेति । उक्तार्थानङ्गीकार इति तदर्थः । वाक्यशेषे = वाक्यस्य शेष-भागस्तस्मिन् । आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेति मन्त्रोत्तरा-र्द्धस्यैवोक्तार्थे मानत्वं बोध्यम् । अन्यथा आनन्दं विद्वानिति प्रयोगस्य

वैयर्थ्यमापद्येत तदीयानन्दस्य ज्ञानविषयत्वं भयनिवृत्तिफलकत्वञ्चोक्तं विरुद्ध्येत । ३५५ । ३५६ । ३५७ ॥

**मनसैवानुद्रष्टव्यो दृश्यते त्वग्र्ययेति च ।**
**अन्यान्यपि वाक्यानि तज्ज्ञानविषयाणि हि ॥३५८॥**
**वाध्येरंस्तदनिष्टं वै ह्यास्तिकानान्तु सर्वथा ।**
**तस्माच्छास्त्रेण सद्बुद्धयाऽपरिच्छिन्नतया हरिः ॥३५९॥**

ब्रह्मणश्शुद्धमनोग्राह्यत्वं श्रुतिमुखेन द्रढ़यति—मनसैवेति । अप्राकृतमनसा परमात्मा द्रष्टव्यः । त्वग्र्यया सूक्ष्मबुद्धया दृश्यते परमात्मेत्यर्थः । आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । तरति शोकमात्मवित् । यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्, तन्त्वौपनिषदं पुरुषं पृच्छामः । सर्वे वेदा यत्पदमामनन्ति वै, नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती । वेदैश्च सर्वैरहमेव वेद्यः । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः, इत्यादिश्रुतयः स्मृतयश्च सन्ति ताभिर्ब्रह्मणो ज्ञानविषयत्वं प्रतिपाद्यते । अन्यथा तासां वाधः प्रसज्येतेत्याह—अन्यान्यपीति । तज्ज्ञानविषयाणि = ब्रह्मज्ञानविषयकानि । हि यतः आस्तिकानां सर्वथा तदनिष्टं वेदान्तवाक्यानां वाधनमनिष्टमित्यर्थः । ३५८ । ३५९ ॥

**अनन्यभक्तैस्तच्चित्तैः ज्ञातव्यस्तदनुग्रहात् ।**
**अर्थोऽयं दर्शितो ज्ञेयः सदाचार्य्यमतानुगैः ॥३६०॥**
**उपादानं निमित्तञ्च ब्रह्मैव जगतः परम् ।**
**कार्यञ्चापि सदेवेदं जायते ब्रह्मणः सतः ॥३६१॥**
**जडाजडात्मकं कृत्स्नं सद्बीजादङ्कुरो यथा ।**
**अव्यक्तनामरूपस्य निलीनस्य हि कारणे ॥३६२॥**

नामरूपविभागेन व्यक्तिजन्मेति कथ्यते।
तत्र सङ्घातरूपं वै नाप्यारम्भात्मकं खलु ॥३६३॥

तस्मात्—ब्रह्मणश्शास्त्रादिवेद्यत्वाभ्युपगमात्। शास्त्रेण = वेदान्तादिना। सद्बुद्धया = अप्राकृतबुद्धया। तच्चित्तैः तस्मिन् भगवति वासुदेवे चित्तं मनो येषां तैः। अनन्यभक्तैः = श्रीवासुदेवैकमात्रनिष्ठभक्तैः। तदनुग्रहात्=भगवदनुग्रहात्। अपरिच्छिन्नतया = देशतः कालतः वस्तुतः परिच्छेदशून्यतया, अभेदे तृतीया। अन्वयश्चास्याः हरिपदार्थे। तथाचोक्तपरिच्छेदशून्यो हरिः भक्तपापमोचकः मनोहरणशीलो वा ज्ञातव्यः साक्षात्कारविषयः कर्त्तव्यः। सदाचार्यमतानुगैः = अनादिवैदिकसम्प्रदायप्रकर्त्तकाः ये सर्वोत्तमा आचार्य्यास्तेषां मतः श्रुतिस्मृतिसूत्रसिद्धो यो सिद्धान्तस्तदनुगन्तृभिरयमर्थो दर्शित इति ज्ञेय इत्यर्थः। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्। तमक्रतुं पश्यति वीतशोकः धातुप्रसादान्महिमानमीशम्। मु० उ०। ३।२।३। एषा श्रुतिरत्रानुसन्धेया ॥१०१॥ इति ब्रह्मणो ज्ञानविषयत्वसमर्थनम्। अन्ये वादिनो जगतो मूलकारणंसङ्घातमितिवदन्ति। साङ्ख्यास्त्वखिलस्य जडवर्गस्य मूलकारणं प्रधानमिति मन्यन्ते, एतेषां मतमाक्षेप्तुं निखिलस्य-जडादिवर्गस्य मूलकारणं ब्रह्म इति ब्रह्मकारणवादं व्यवस्थापयति—उपादानमिति। अस्य विश्वस्याभिन्ननिमित्तोपादानकारणं परब्रह्मैव भवितुमर्हति नतु प्रधानादिकम। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ब्र० सू० १।४।२५। अभिध्योपदेशात् ब्र० सू० १।४ २५। योनिश्च हि गीयते ब्र० सू० १।४।२५। इतिसूत्रैःपरब्रह्मण एव जगदभिन्ननिमित्तोपादानकारणत्वं निश्चीयते, तदैक्षत बहुस्यां प्रजायेयेति बहुभवनसङ्कल्पोपदेशादपि अभिन्ननिमित्तोपादानकारणत्वं ब्रह्मणोऽभिहितम् तत्र तदक्षतेति स्रष्टृत्वं बहुस्यामित्युपादानत्वमिति विवेकः। किञ्च 'साक्षाच्चाभयाम्नानात्'ब्र०स०१।४।२५। इतश्चोभयविधकारणं ब्रह्म, यतः साक्षान्निमि-

तत्त्वमुपादानत्वञ्च तस्याम्नायते किंस्विद्वनं क उ स वृक्ष आसीदित्यादिना। कथमसतः सज्जायेत उ० छा० ६। २। २। इतिश्रुत्यैवासद्वादं प्रतिक्षिप्य सदेव सोम्येदमग्र आसीदिति श्रुत्या सत्कार्यवादो व्यवस्थाप्यत इत्याशयेनाह—कार्यमिति। यथा सद्बीजादङ्कुर उत्पद्यते, तथा सतः=सद्रूपाद्ब्रह्मणो वासुदेवात् कृत्स्नं जडाजडात्मकार्यं सद्रूपमिदं जायते उत्पद्यते "यतः सर्वाणि भूतानि जायन्ते" जन्माद्यस्य यतः इतिश्रुतिसूत्राभ्यां ब्रह्मणो जगदुदयस्थितिलयकारणत्वं निश्चीयत इत्यर्थः। विश्वस्य सद्रूपत्वं वोधयन् जन्मशब्दं व्याचष्टे। अव्यक्तनामरूपेति। कारणे जगज्जन्मादिकारणे परब्रह्मणि वासुदेवे निलीनस्य सूक्ष्मरूपतयाऽवस्थितस्याव्यक्तनामरूपस्य नामरूपविभागानर्हस्य जडाजडवर्गस्य नामरूपविभागेन व्यक्तिः जन्मेति कथ्यते। पूर्वाचार्य्यैरिति शेषः। एतेनाजडवर्गस्य प्रत्यगात्मनो नित्यत्वात्कथं तस्योत्पत्तिः पूर्वमभिहिता इतिशङ्का निरस्ता। (इति ब्रह्मणो जगदभिन्ननिमित्तोपादानत्वमितिसमर्थनम्) उपादानकारणानां तन्त्वादीनां समुदाय एव पटादिकार्यं नतु कारणादतिरिक्तं कार्यं नाम किञ्चिदिति सङ्घातवादः, सौत्रान्तिकानां वैभाषिकाणाञ्च वौद्धानाम्। अयञ्च सङ्घातः प्रतिक्षणं नवनवउत्पद्यते, उपादानकारणञ्च स्वविनाशद्वारैककार्योत्पादकं भवति। समवायिकारणमसमावायिकारणंनिमित्तकारणञ्चेति त्रिविधकारणसमुदायः स्वस्माद्भिन्नं कार्यमुत्पादयति। अयमारम्भवादो वैशिषिकाणां नैयायिकानाञ्च। एतत्पक्षद्वयं दूषयितुमाह—३६०। ३६१। ३६२। ३६३॥

**अवैदिकौ यतश्चोभौ निरस्तौ सर्ववैदिकैः।**
**वैदिकानान्तु सर्वेषां श्रुत्याद्युक्तं हि सम्मतम्॥३६४॥**
**यत्तु विवर्त्तमेवेदं ब्रह्मणः कैश्चिदुच्यते।**
**तन्न विवर्तपाठस्य शास्त्रेष्वश्रवणं यतः॥३६५॥**

तत्र=कारणविचारे। सङ्घातरूपं=कारणानां समुदाय एव

कार्यमिति मन्यन्ते वौद्धानुयायिनः। तन्तुभिरारब्धःपटःस्वसमवायिकारण-भूतात्तन्तुसमुदायादपि भिन्न एवेति, आरम्भवादं मन्यन्ते कणभक्षपक्षानुयायिनः। सङ्घातारम्भवादौ यतोऽवैदिकौ, अतः सर्ववैदिकैः निरस्तौ तयोः श्रुतिप्रमाणरहितत्वेन शिष्टैरपरिगृहीतत्वात्तस्यदूषितत्वम्। तन्निरासप्रकारश्च वेदान्तकौस्तुभप्रभायां द्रष्टव्यः। उपादानकारणस्य तात्विकोऽन्यथाभावः कार्यमित्येष परिणामवादो वैदिकानां वैष्णवाचार्य्याणामभिमतः, स च स्वयमात्मानं कुरुत सच्च त्यच्चाभवत्। यथोर्णनाभिः सृजते गृह्णतेच यथा सतः पुरुषात् केशलोमानि यथा पृथिव्या ओषधयः सम्भवन्ति तथाक्षरात् सम्भवतीह विश्वम्"।'आत्मकृतेःपरिणामात्'ब्र०सू० १।४।"तथैव परिणामेन विश्वस्य भगवान् हरिरितिश्रुतिस्मृतिन्यायसिद्धः। वस्तुतस्तु शक्तिविक्षेपस्यैव परिणामशब्देन विवक्षिततया ब्रह्मस्वरूप-परिणामानभ्युपगमान्न नित्यश्रुतिगन्धविरोधोऽऽपीत्यभिप्रेत्याह- वैदिकानामिति। श्रुतिसिद्धं परिमाणभावं हि यतः सर्वेषां वैदिकसिद्धान्तानुयायिनां सम्मतं अतआरम्भसङ्घातवादौ निरस्ताविवितियोजना ६४। अतात्त्विकः कारणान्यथाभावः कार्यमित्येष विवर्त्तवादः श्रीशङ्कराचार्य्यानुसारिणामद्वैतवैदान्तिकानामभिमतस्तन्मतं श्रुतिस्मृतिसूत्रप्रमाणवर्जितत्वान्न युक्तमित्याशयेन विवर्त्तवादं दूषयितुमाह—यत्त्विति। इदं परिदृश्यमानं जगत् ब्रह्मविवर्त्तभूतमिति मायावादिभिरुच्यते। तन्न यतः हेतोः विवर्त्तपाठस्य शास्त्रे हीति निश्चयेऽश्रवणमिति योजना। विवर्त्तशब्दःश्रुतिस्मृतिसूत्रेषु कुत्रापि न श्रुयते अतस्तद्वादोऽयुक्त इत्यर्थः। यथा भ्रमस्थले रज्जुविवर्तः सर्प इति सर्पप्रतीतिसमये रज्जुप्रतीतिर्न भवति तथा ब्रह्मविवर्त्तभूतं जगदितिजगत्प्रतीतिसमये ब्रह्मणः प्रतीतिर्नस्यात अभ्यस्तमेवहि परिस्फुरति भ्रमेषु ( सं० शा० १। ३६ ) इतिन्यायात्। व्यवहारदशायां ब्रह्मप्रतीतिर्नैव भवतीति तु न मन्तव्यम्। घटोऽस्ति घटःसन्नित्यादौ सद्रूपेण ब्रह्मप्रतीतिरत्यन्ताभेदवादिभिरङ्गीकारादित्यभिसन्धिः। ३६४। ३६५॥

अप्रमाणं मतं तद्वै शास्त्रविद्भिरितीरितम् ।
भ्रान्तिकल्पितमेवातो विज्ञेयश्च विवेकिभिः ॥३६६॥
ननु श्रुत्यादिवाक्यानि प्रमाणत्वेन सन्ति हि ।
सदेवेत्यादिकान्येव सत्त्वमेकस्य ब्रह्मणः ॥३६७॥
ज्ञापयन्त्येवकारेणासत्वमन्यस्य वस्तुनः ।
तस्माद्विश्वमिदं ब्रह्मण्यज्ञानेनैव कल्पितम् ॥३६८॥

तत् विवर्त्तवादम्, अप्रमाणम् = श्रुत्यादिप्रमाणरहितमिति शास्त्रविद्भिः वै इति निर्धारेण ईरितम् कथितम् । अतः श्रुतिस्मृतिसूत्र-प्रमाणराहित्यात् भ्रान्तिकल्पितमेवेति विवेकिभिः विज्ञेयमिति योजना ३६५ । सदेव सोम्यदमग्र आसादित्यादिश्रुतिरेव सद्रूपब्रह्मव्यतिरिक्तस्य वस्तुनः सत्वं निषेधयन्ती विश्वस्याताात्विकत्वे मानं तथासति विवर्त वाद उपपद्यत इति शङ्कते—नन्विति । एवमेवाद्वितीयं ब्रह्म नेह नाना-स्ति किञ्चनेत्यादिश्रुतयस्सन्ति ताभिर्द्वितीयमात्र निषिध्यते तेन ब्रह्मव्य-तिरिक्तस्य विश्वस्य मिथ्यात्वं सिद्ध्यतीत्याह—श्रुत्यादिवाक्यानीति । विवर्त्तवादे प्रमाणत्वेनेकमेवाद्वितीयमित्यादिवाक्यानि सन्ति सदेवेति वाक्यानि एकस्य ब्रह्मणः सत्त्वं ज्ञापयति । सदेवेतिश्रुतिनिविष्टैवकारेण ब्रह्मातिरिक्तस्य वस्तुनो विश्वस्यासत्यत्वं वोध्यते तस्मात् = श्रुत्यादि-प्रमाणात् । इदं दृश्यमानं विश्वं ब्रह्मण्यज्ञानेनैव = अविद्यया कल्पितम् । ३६६ । ३६७ । ३६८ ॥

उक्तार्थं दृष्टान्तेन द्रढयति ।

रज्जौ सर्पोऽप्यसच्छुक्तौ रजतं भासते यथा ।
ज्ञानेनाद्वैतरूपेण द्वैतारोपो हि वाध्यते ॥ ३६९ ॥

इति चेन्नैवं सम्भाव्यं विरुद्धत्वाद्धि सर्वथा ।
श्रुतयस्तस्य विश्वस्य सत्यमेव वदन्ति वै ॥ ३७० ॥
यदिदं किञ्च तत्सत्यमित्याद्याः कण्ठतः स्फुटम् ।
असत्यमाहुर्जगदेतदज्ञाः ॥
शक्तिं हरेर्येन विदुः परां हि ।
अज्ञत्वं वदन्तीयञ्च जगतोऽसत्यवादिनः ॥ ३७१ ॥

यथा रज्जावसन्सर्पः शुक्तावसद्रजतं भासते तथा ब्रह्मातिरिक्तः । सर्वोऽप्ययं प्रपञ्चो ब्रह्मण्यविद्यापरिकल्पितो भासते । ज्ञानेन निर्विशेषब्रह्मात्मैकत्वज्ञानेन द्वैतारोप इति, अखिलोभेदो मिथ्याभूत एवाज्ञानेन बाध्यत इत्यर्थः । इति मायावादिनो पूर्वपक्षः । अयं समाधिरभिधीयते भवेत्तदेवं यदि प्रपञ्चस्यासत्वे प्रमाणं विद्येत नतु तदस्तीत्याह— इति चेन्नेति । सर्वथा विरुद्धत्वात्=श्रुतिस्मृतिसूत्रप्रमाणविरुद्धत्वात् । विश्वस्यासत्यत्वं नैवसम्भाव्यम् हि यतः सदेव सौम्येदमग्र आसीत् उर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थसनातनः तत्सदासीत् प्राणा वै सत्यं तेषामेव सत्यम् यदिदं किञ्च तत्सत्यमित्याद्याः श्रुतयः कण्ठरवेण विश्वस्य सत्यत्वं वदन्ति वै इतिनिर्धारणे । असत्यमिति । एतत जगत् प्रपञ्चमात्रमज्ञाः, ज्ञानशून्या ये असत्यमाहुः हि यतः ते हरेर्भगवतः परांशक्तिं न विदुः इयंसत्यमाहुरितिश्रुतिः ये अज्ञा जगतोऽसत्यत्वं वदन्ति तेषां वादिनामज्ञत्वं बोधयन्ति । ३६९ । ३७० । ३७१ ॥

असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
इत्युक्तमासुरत्वञ्च गीतायां श्रीमुखेन वै ॥३७२॥
असत्यविषयश्चापि वाक्यं यद्विद्यते हि तत् ।
धर्मान्तरेण व्याख्यातं सूत्रकारेण नान्यथा ॥३७३॥

तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ ३७४ ॥

इत्थं पराशरेणापि वाक्यं तद्विवृतं स्फुटम् । तस्माद्विकारिसत्ताकं जगदेतन्निरूपितम् । यस्मात्तेषु दृष्टादृष्टवस्तुज्ञापकं श्रेयोबोधकं शास्त्रं न विद्यतेऽतएव ते असत्यमप्रतिष्ठमनीश्वरञ्च जगदाहुः । तत्र "सदेव सोम्येदमग्र आसीत्" "सत्त्वाच्चावरस्य भावेचोपलब्धेः" । ऊर्द्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययमित्यादिभिः सत्यत्वेनोक्तमप्यसत्यं कालत्रयेऽपि सत्ताशून्यं सत्यतया भानं भ्रान्त्येत्याहुः । प्रपञ्चस्यासत्यत्वं वदतामासुरत्वं भगवता वासुदेवेन भगवद्गीतायामभिहितम् । असदेवेदमग्र आसीदितिश्रुतावसदव्यपदेशस्यापि विद्यमानत्वात्कथं सत्यमित्याशङ्क्य परिहरति = असत्येति । असत्यविषयं यद्वाक्यम् असदेवमग्र आसीदति वाक्यं यत्र विद्यते तत् धर्मान्तरेण व्याख्यातं सूत्रकारेणेति योजना । "असद्व्यपदेशादितिचेन्न धर्मान्तरेण वाक्यशेषात् । ब्र० सू० २ । १ । १७ । इतिसूत्रेणाव्याकृतत्वरूपेण परिणामित्वेन रूपेण वा धर्मान्तरयोगेनासच्छब्दार्थस्य सूत्रकारेणैव निरूपितत्वात् "तत्सदासीदिति वाक्यशेषे सत्यत्वाभिधानात् । उक्तार्थं पराशरवचसा दृढ़यति-तदेतदक्षयमिति विष्णुपुराणे । तस्माद्विकारिसत्ताकस्येदङ्कारास्पदस्य जगतः कारणावस्थायामनभिव्यक्तनामरूपकत्वादसदादिशब्दवाच्यत्वाभिधानमप्यविरुद्धं कार्यावस्थायान्त्वभिव्यक्तनामरूपकत्वादाविर्भूतविस्तारकंसदादिपदवाक्यत्वम्भजत इतिश्रुत्यविरोधोऽन्यथा कथमसतः सज्जायतेति वाक्यशेषविरोधात् । तथाचोक्तं वैष्णवे श्रीध्रुवेण "न्यग्रोधः सुमहानल्पे यथावीजे व्यवस्थितः । संयमे विश्वमखिलं वीजभूते तथा त्वयि ॥ वीजादङ्कुरसम्भूतो न्यग्रोधः समुत्थितः । विस्तारञ्च यथा याति त्वत्तः सृष्टौ तथा जगदिति । तथा चाह भगवान्सूत्रकारः "पटवच्चेति" ब्र० सू० २ । १ । १८ । सूत्रेण 'यथा'

सङ्कुचितः पटः पटत्वेनागृह्यमाणोऽपि 'पट एव' प्रसारणे तु पटत्वेन स्पष्टतया 'गृह्यते' स एव, तथा तिरोभावापन्नमव्यक्तमपि 'जगत्कार्यत्वेन नामरूपाभ्यामगृह्यमाणमपि सदेवाविर्भूतन्तु प्रत्यक्षागमाभ्याम् । ३७२ । ३७३ । ३७४ ॥

सत्येन स्पष्टं गृह्यत इति सूत्रार्थसङ्ग्रहः जगतोऽनिर्वचनीयत्वं ये वदन्ति तन्मतंदूषयितुमाह—

**सदसदभ्यां पदार्थाभ्यां तृतीयं नैव विद्यते ।**
**तस्मादेव निरस्ता चानिर्वचनीयताऽस्य वै ॥ ३७५ ॥**
**आरोपोऽपि भवेत्तस्य सत्यश्चान्यत्र यद्भवेत् ।**
**असत्यस्य खपुष्पादेरारोपो नैव दृश्यते ॥ ३७६ ॥**

प्रपञ्चस्यानिर्वचनीयत्वं सद्विलक्षणत्वम् वा, असद्विलक्षणत्वं वा, सदसद्भिन्नत्वं वा। नाद्यः—असति नृश्रृङ्गादावतिव्याप्तेः। नापि द्वितीयः—आत्मन्यतिव्याप्तेः। नापि चरमः। वस्तुजातस्य सदसदन्यतरत्वनियमेन तादृशप्रतियोग्यसिद्ध्यासम्भवादित्याशयेनाह—सदसद्भ्यामिति। केचित्पदार्थाः सद्रूपाः, घटपटादयः। केचिदसद्रूपाः खपुष्पादयः। उभाभ्यां पदार्थाभ्यां तृतीयः प्रकारो नास्ति। तस्मात् = सदसद्विलक्षणेतरपदार्थाभावात् अस्य—प्रपञ्चस्य अनिर्वचनीयता निरस्ता वै इति निर्धारणे। ३७५ ॥

ब्रह्मणि प्रपञ्चारोपोऽपि वक्तुमशक्यः। असत आरोपाऽसम्भवात्। एकत्र सत एवान्यत्रारोपनियमान्नहि स्वरूपेणासतः शशश्रृङ्गादेरारोपोऽदृष्टाश्रुतत्वादित्याह—आरोपोऽपीति। यदि यद्वस्तुनोऽन्यत्र सद्रूपता स्यात्तदा तस्यारोपो भवितुमर्हति, नत्वसद्रूपस्य। तथासति असतः खपुष्पादेरारोपः प्रसज्ज्येत। तस्मादसतः प्रपञ्चस्य ब्रह्मण्यारोपो न सम्भवदुक्तिकः। १७६ ॥

रज्वामपिन सर्पस्य सत्यस्य प्रत्ययः खलु ।
सत्यसर्पस्य यज्ज्ञानं कारणंप्रत्ययस्य तत् ॥ ३७७ ॥
सर्पज्ञानवतामेव भयं रज्ज्वा प्रजायते ।
दोषयोगेन बालानां ज्ञानाभाववतां क्वचित् ॥३७८॥
प्रत्युत सत्यसर्पोऽपि हस्तैस्तैर्गृह्यते खलु ।
तथैव शुक्तिकायाश्च प्रतीतेरजतस्य वै ॥३७९॥
सत्त्वमेवोच्यते तस्यहेतोस्सत्त्वाद्विवेकिभिः ।
तस्मात्सद्धेतुकं सर्वज्ञानं सत्यं प्रकीर्तितम् ॥ ३८० ॥

यथा सत्यप्रतितौ कारणस्य सत्यत्वमभ्युपेयते तथा भ्रमस्थलेपि सद्विषयकज्ञानस्यैव कारणत्वं नतु सत्यस्य विषयस्येत्याह—रज्ज्वामपीति। रज्जौ सर्प बुद्धौ सत्यस्य सर्पस्य न कारणत्वं किन्तु सत्यसर्पस्ययज्ज्ञानमस्ति तत् ज्ञानं रज्जौ सर्पप्रत्ययस्य कारणमित्यर्थः ।
उक्तार्थं द्रढयितुमाह-सर्पेति सर्पज्ञानवतां पुंसां रज्ज्वा भयं जायते तैमिरिकदोषयोगे सति सर्पज्ञानाभाववतां बालानां कदाचिदपि भयं न भवति । सर्पज्ञानसत्वे भयकम्पादिर्जायते तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां कारणमात्रस्य सत्यत्वं निश्चीयते । सर्पज्ञानाभाववतो बालस्य सत्यसर्पदर्शनेऽपि भयादिर्नजायते । प्रत्युत सत्यसर्पग्रहणे प्रवृत्ति र्बालस्य दृश्यते । इत्याह प्रत्युतेति । तैः बालैः । शुक्तौ रजतप्रतीतिर्यथार्थां तत्कारणस्य सद्रूपत्वादिति, सत्ख्यातिवादिनां पन्था इत्याशयेनाह-तथैवेति । शुक्तिकायां रजतस्य = प्रतीतेः विवेकिभिः सत्ख्यातिवादिभिस्सत्वमेवोच्यते तस्याः = प्रतीतेः । हेतोः सत्वात् = सद्रूपत्वात् । उपसंहरति—तस्मादिति । सर्व प्रत्ययानां यथार्थत्वेनारोपस्यासिद्धत्वादित्यर्थः । सद्धेतुकं सर्वज्ञानं सत्यं प्रकीर्तितम् । सर्वे प्रत्ययाः यथार्थाः सद्धेतुकत्वादयं घट इति प्रत्ययवदितिप्रयोगः । ३७७, ३७८, ३७९, ३८० ॥

आरोपोऽपि भवेत् त्रित्वे सत्येव नान्यथा क्वचित् ।
सर्वत्र त्रितयं दृष्टमारोपे रजतादिके ॥ २८१ ॥
ससादृश्यमधिष्ठानं संस्कारो विषयस्य च ।
सदोषः पुरुषश्चेति त्रिकं तस्य हि साधकं ।३८२॥
निर्विशेषेऽद्वितीये वै चिन्मात्रे ब्रह्मणीतरे ।
न सादृश्यादयो वक्तुं शक्याद्वैताद्विशङ्किना ।३८३॥
तस्माद्विवेकिनामग्रेऽध्यारोपोऽपि निरूपितुम् ।
परब्रह्मण्यशक्योस्त्यद्वैतमेव रिरक्षुणा ॥ ३८४ ॥

संस्कारसादृश्यदोषाश्रयपुरुषाणामध्यारोपे क्लृप्तानां कारणा-नामभावेन कथमध्यारोपोपपत्तिरित्याह—आरोप इति । वक्ष्यमाणानां त्रयाणां कारणानां सद्रूपाणां विद्यमानत्व एवाध्यारोपो भवतुमर्हति । नान्यथा । अन्यथा = कारणत्रयासत्वे । शुक्तौ रजतस्यारोपे संस्कारसा-दृश्यदोषरूपकारणत्रयमपेक्षितं भवति । अध्यारोपे काणं यदुक्तं तानु-दाहरति—ससदृश्यमिति । सादृश्येण सह वर्तते ससादृश्यमधिष्ठानं विषयस्य संस्कारो दोषाश्रयः पुरुषश्चेति त्रिकमारोपसाधकम् । तस्य = आरोपस्य । आरोपे सादृश्यज्ञानस्यापि कारणत्वात् प्रकृते तु निर्विशेष-स्याधिष्ठानस्य सादृश्याभावात्कथमध्यारोपः । "न सदृशे तिष्ठति रूप-मस्य न तस्य प्रतिमाऽस्तीति" निषेधश्रवणादित्याशयेनाह । निर्विशेष इति । निर्विशेषे = सकलविशेषरहिते । अद्वितीये = स्वसजातीयद्विती-यरहिते । चिन्मात्रे = स्वयं प्रकाशज्ञानमात्रस्वरूपे । ब्रह्मणि, हि यतः द्वैताच्छंकिना मायावादिना इतरे सादृश्यादय वक्तुं न शक्याः; ब्रह्म-व्यतिरिक्तस्य सर्वस्य मिथ्यात्वेनाङ्गीकारात्सादृश्यादीनामध्यासकार-णानां सत्यत्वभ्युपगन्तुं न शक्यते, अन्यथाऽद्वैतव्याघातापत्तेः ।

तस्मात् = अध्यारोपसामग्र्यभावात्। विवेकिनां विवेचकानामग्रे परब्रह्मणि, अद्वैतरिरक्षुणा मायावादिना अध्यारोपोऽपि निरूपयितुमशक्योऽस्ति, इतियोजना। कारणकलापसत्वे कार्योत्पत्तिर्जायत इति तावन्निर्विवादमास्तिकानाम्। तथाचाध्यारोपकारणानां तात्त्विकत्वेऽद्वैतहान्यापत्तिः। तेषामसत्यत्वाभ्युपगमे तु कार्योत्पत्तिकथाया एवानवसरःस्यादिति भावः। ३८१। ३८२। ३८३। ३८४।

एतावता प्रवन्धेन प्रपञ्चस्य सत्यत्वं समर्थितं सम्प्रति ज्ञानेनाद्वैतरूपेण द्वैतारोपो हि वाध्यत इतिप्रागभिहितं तं दूषयितुमाह—

ज्ञानेन वाध्यते चेति यदुक्तं तत्र पृच्छ्यते।
वाधकं तस्य यज्ज्ञानं स्वरूपमुतशास्त्रजम्। ३८५॥
स्वरूपं तत्र सामान्यं वाधकं नैव जायते।
यथेदन्ता हि सामान्यं रजतस्य न वाधकम्।३८६॥
किन्तु विशेषज्ञानं वै शुक्तित्वाख्यं हि वाधकम्।
दार्ष्टान्तिके तु चिन्मात्रे शुद्धे ब्रह्मणि निर्गुणे।३८७॥
नाङ्गीकृतो विशेषो वै द्वैतापत्तिप्रसङ्गतः।
तस्माच्छुद्धरूपन्तु नारोपस्य हि वाधकम्। ३८८॥

द्वैतस्यारोपाज्ज्ञानेन वाध्यते इति प्राक् यदुक्तं तत्र जिज्ञास्यते। तस्य = आरोपस्य। वाधकं यज्ज्ञानं भवद्भिरभिमतं तज्ज्ञानं स्वरूपात्मकं वा शास्त्रजं वा, आद्यपक्षमपाकरोति। स्वरूपमिति। तत्र = द्वैतारोपे। सामान्यधर्मो न वाधकः प्रत्युतसाधकः। इदं रजतमित्यत्रेदन्त्वरूपधर्मो रजतस्य साधकः शुक्तावस्ति शुक्तित्वञ्च तस्य वाधकमित्याह—यथेदन्ताहीति। इदन्त्वरूपसामान्यं रजतस्य न वाधकम्। शुक्तित्वाख्यं

विशेषज्ञानं रजतत्वारोपस्य वाधकम्। उक्तप्रकारस्य दार्ष्टान्तेऽभावा-दित्याह—दार्ष्टान्तिकेत्विति । द्वैतारोपवाधकः विशेषधर्मो निर्विशेष-चिन्मात्रे द्वैतापत्तिप्रसङ्गान्नाभ्युपेयते। तथाच ब्रह्मणः सामान्यधर्मत्वा-दिना तावज्ज्ञातत्वं न सम्भवति निस्सामान्यत्वात् ज्ञातविशेषवत्त्वञ्च न सम्भवति निर्विशेषत्वाङ्गीकारादिति भावः। फलितार्थं दर्शयति तस्मा-दिति। निर्विशेषे ब्रह्मणि विशेषरूपानङ्गीकारादित्यर्थः। तु पुनरर्थे। शुद्धस्य रूपं सामान्यं द्वैतारोपस्य न वाधकम्। ३८५ ३८६ ३८७;३८८ ॥

द्वितीयमपि नैव स्यादारोपस्य हि वाधकम्।
शास्त्रस्य विषयं शुद्धं ब्रह्म तु नैव सिध्यति ॥३८९॥
विषयत्वे च मिथ्यात्वप्रसङ्गः स्याद्भवन्मते।
शुद्धादन्यस्य विश्रान्तःपाति त्वाद्भवतां मते ॥ ३९० ॥
तज्ज्ञानं वाधकं नैव ज्ञानवाध्यं यतः स्वयम्।
अपिच शास्त्रजं ज्ञानं सत्यं वाऽन्यद्विवक्षितम् ॥३९१॥

तस्य सत्वेऽद्वैतहानिरसत्वे वाधकं कुतः। शास्त्रजन्यज्ञानमद्वै-तारोपस्य वाधकमितिद्वितीयपक्षं निरस्यति द्वितीयमपीति। शास्त्रजं ज्ञा-नमपीत्यर्थः। हि यतः वेदान्तशास्त्रजन्यज्ञानविषयत्वस्य शुद्धे ब्रह्मण्य-भावाच्छास्त्रजं ज्ञानं नाद्वैतारोपवाधकमित्यर्थः यदि ब्रह्मणो ज्ञानवि-षयत्वं स्यात्तदा तस्य त्वन्मते मिथ्यात्वं स्यादित्यर्थः मायोपहितब्रह्मज्ञानं द्वैतारोपवाधकं यद्याशङ्केत तदाप्याह—शुद्धादन्यस्येति। भवतां नये शुद्धादन्यस्य शवलस्य ब्रह्मणो विश्रान्तःपातित्वाच्छवलब्रह्मज्ञानं न वाधकं यतः स्वयं वाध्यमिति योजना ब्रह्मातिरिक्तस्य सर्वस्य वाध्यत्वा-न्मायोपहितब्रह्मज्ञानमपि वाध्यं यच्च वाध्यं तन्न वाधकमिति भावः। शास्त्रजन्यं ज्ञानं द्वैतारोपवाधकं सद्रूपमसद्रूपं वेति विकल्पयति अपिचेति। अन्यत् = असत्यम्। आद्यपक्षं निरस्यति सत्य इति।

शास्त्रजन्यज्ञानस्य तात्त्विकत्वेऽद्वैतव्याघातः। तस्यातात्त्विकत्वे प्रपञ्चस्य सद्रूपतापत्तिः प्रपञ्चारोपबाधकाभावात्। ३८९। ३९०। ३९१॥

नन्वस्य व्यवहारे तु सत्यत्वमुररीकृतम्।
इतिचेद्व्यवहारोप्यसत्यतोवान्यथामतः ॥ ३९२॥
किञ्च तस्य मायायाः कार्यत्वादविशेषतः।
मायिको मायिकस्यैव बाधकं च कथं भवेत् ॥ ३९३॥
"सजातीयत्वतो नैव बाधकं जायते क्वचित्।
नन्वयसा यथा लोहं भिद्यते तच्च दृश्यते ॥ ३९४॥
तथा दार्ष्टान्तिके बोध्यमितिचेन्नैवमुच्यताम्।
तत्रायसो न भेतृत्वं कारणत्वस्य निश्चयात् ॥ ३९५॥

शास्त्रजन्यज्ञानस्य व्यवहारदशायां सत्यत्वमभ्युपेयतेऽतः तस्य प्रपञ्चबाधकत्वमुपपद्यत इति शङ्कते-नन्विति। अस्य=शास्त्रजन्य-ज्ञानस्य। असत्यतः=कूटकार्षापणादितः। व्यवहारः। अन्यथा= असत्यःमतः। ब्रह्मव्यतिरिक्तस्य सर्वस्य मायाकार्यत्वात् शास्त्रजन्य ज्ञानस्यापि मायिकत्वं वाच्यम् तथा सति तस्य मायिकप्रपञ्चं प्रति बाध-कत्वं नोपपद्यत इत्याह-किञ्चेति। विजातीययोरेव बाध्यबाधकभावो नतु-सजातीययोरित्याह—सजातीयेति। लोहमयवास्यादिना। यथा लोहमयं वस्तु भिद्यते तथा सजातीयेन शास्त्रजन्यज्ञानेन मायिकं विश्वं बाध्यत इति शङ्कते। नन्विति यस्य वस्तुनः कारणत्वमभ्युपेयते तस्य न कर्तृत्वं-तत्रायसः करणत्वं नतु कर्तृत्वमित्याशयेन परिहरति-नेति। ३९२,३९३, ३९४,३९५॥

एवञ्च जगदाचार्य्यशास्त्रादीनां हि सत्तया।
ब्रह्मभावापत्तिर्भवत्येव नासत्येन कदाचन ॥ ३९६॥

यदि नामरूपादिकं विश्वं सत्यं न स्यात्तर्हि तत्सत्योपदेशोऽपि न स्यात्। "सदेव सोम्येदमग्र आसीत्" "अष्टरूपामजां। ध्रुवाम् गोरनाद्यन्तवती" "अश्वत्थः सनातन" इत्यादिश्रुतेः। उपदेष्टुराचार्य्यस्य मिथ्यात्वे कथं तदुपदेशात्तत्त्वज्ञानाधिगमस्तदसम्भवो नहि कल्पितस्याचार्य्यत्योपदेष्टृत्वमभ्युपगन्तुं शक्यम्, किन्तु शास्त्रोक्तलक्षणवत्वेन लक्षितस्याचार्य्यस्योपदेष्टृत्वं श्रूयते स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। आचार्य्यवान् पुरुषो वेद इतिश्रुतेः। यदि शास्त्रमपि मिथ्याभूतं कथं तदुपदेशात्तत्त्वज्ञानोत्पत्तिर्भवितुमर्हति तदभावे मुक्त्युत्पतेरसम्भवः। अतो जगदाचार्य्यशास्त्रादीनां सत्यत्वं वक्तव्यं तथासति नोक्तदोषापत्तिः। असत्येनेति। नहि काल्पनिकादर्थात् कार्योत्पत्तिर्दृष्टाचरा श्रुतावा। ३६६॥

प्रागभावप्रतियोगि जगन्नेति कदाचन ।
एवञ्चेदन्यथाकाशपुष्पादिर्दृश्यतामयम्॥ ३६७॥
अहमादेर्न कर्तृत्वं करणत्वस्य निश्चयात्।
कर्तृत्वं चैतनस्यैव दृश्यते लोकशास्त्रयोः॥ ३६८॥
करणस्य न कर्तृत्वं वास्यादिष्वितिनिश्चयात्।
भवद्भिरात्मनो नैव कर्तृत्वमुररीकृतम्॥ ३६९॥

यद्युक्तप्रकारेण प्रपञ्चस्य सत्यत्वं सिद्धं तदा ऽत्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं न तस्य सिद्धयतीत्याशयेनाह- प्रागभावेति। प्रागुदाहृतक्रमेण जगतः सत्यत्वाद्धेतोस्तस्मिन् प्रागभावप्रतियोगित्वं नोपपद्यते। प्रागभावाप्रतियोगित्वेसति ध्वंसाप्रतियोगित्वमितिनित्यत्वलक्षणस्य प्रपञ्चे विद्यमानत्वात् श्रुतिमूलकतर्कनिश्चितस्य प्रागभावाप्रतियोगित्वज्ञानस्य ग्राह्याभावमुद्रया प्रागभावप्रतियोगित्ववत्ताज्ञानं प्रति प्रतिबन्धकत्वाच्च। एवञ्चेत= प्रागुपदर्शितप्रकारेण प्रपञ्चस्य सत्यत्वे-

सिद्धे चेत् जगत् प्रागभावप्रतियोगीति कदाचन न सिद्ध्यतीति योजना। विपक्षे बाधकतर्कमुपन्यस्यति- अन्यथेति । प्रागभावप्रतियोगित्वरूपा-सत्यत्वाङ्गीकार इत्यर्थः । यथा अयं प्रपञ्चः सर्वैः दृश्यते तथा खपुष्पा-दीनामपि दृश्यत्वं स्यादसत्यत्वाविशेषात् । तस्माज्जगतः सद्रूपत्वं सिद्धम्॥

इति सत्कार्य समर्थनम् ।

सम्प्रति षड्भिः कारिकाभिः आत्मनः कर्तृत्वं निरूपयति ।

अहमादेरिति ।

प्रकृतिकार्यस्याहमादेर्यदि कर्तृत्वं स्यात्तदा करणशक्तिरहङ्कार-स्याहीयेत । कर्तृशक्तिश्चापद्यते, इत्यर्थः । आदिना इन्द्रियाणां परिग्रहः । इन्द्रियाणामाहङ्कारिकत्वात्तेषामपि कर्तृत्वं भवितुं नार्हति करणत्वात् कर्तृत्वञ्च क्रियानुकूलकृतिमत्वं तच्चाचेतनेऽहङ्कारे चक्षुरादौ न सम्भव-तीत्याशयेनाह—कर्तृत्वमिति । अचेतनं प्रकृतिकार्यमहङ्कारादिकं चेत-नानधिष्ठितं स्वीयकार्ये न व्याप्रियते । अतः केनचिच्चेतनेनाधिष्ठात्रा भवितव्यं तथाच सर्वार्थदर्शी सर्वेश्वरः कर्त्ता स्वीकर्त्तव्यः । कुठारेण च्छिनत्तीतिप्रयोगाच्छेदनकरणत्वं कुठारादेरभ्युपगन्तव्यं नतु तस्य कर्तृत्वं परमते तु स्वाभाविकं कर्तृत्व मात्मनोनास्तीत्यर्थः ॥ १३५ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" सदेव सोम्येदमग्र आसीत्" सत्यस्य सत्यमित्यादिश्रुतिभिः परब्रह्मणि पुरुषोत्तमे सत्यत्वं निश्चीयते । बहुस्यां प्रजायेयेति सङ्कल्पपूर्वकमीक्षणकर्तृत्वं । नामरूपे व्याकरवाणि यतो इमानि भूतानि जायन्ते" ब्रह्ममहद्योनिरहं बीजप्रदः पिता इति श्रुतिस्मृतिषु जगज्जन्मादिकर्तृत्वञ्च श्रूयत इत्याह—तस्मादिति । अहमादीनां कर्तृत्वाभावादित्यर्थः । स्वाभाविकगुणशक्त्यादिमत्त्वसत्य कामत्वसर्वज्ञत्वापहतपाप्मत्वशास्त्रवेद्यत्वमुक्तोपसृप्यत्वादयो धर्मा आदि-पदग्राह्याः । अतः विरुद्धधर्माश्रयत्वात् सधर्मकत्वं परब्रह्मणः सिध्य-ति । एवकारेण निर्धर्मकत्वं व्यवच्छिद्यते ॥ ३९७,३९८,३९९ ॥

तस्माच्छ्रुतिषु सत्यत्वकर्तृत्वाद्याश्रयो विभुः ।
श्रूयते परमात्माऽतः सधर्मा एव सिद्धति ॥ ४०० ॥
ब्रह्मनारायणेत्यादिशब्दवाच्यो य ईश्वरः ।
कारणं जगतो ह्येकस्तत्पराश्रुतयस्तु ताः ॥ ४०१ ॥
तत्रैकं पदमेकस्य कारणत्वं ब्रवीति वै ।
अन्ययोगनिषेधार्थ एव कारश्च तत्समम् ॥४०२ ॥
निषेधत्यद्वितीयश्च तदाधिक्यमिति स्थितम् ।
इत्येवं हि श्रुतेरर्थोनिर्णीतोदेशिकोत्तमैः ॥४०३॥

"ब्रह्म वा इदमेक एवाग्र आसीदात्मा वा इदमक एवाग्रे आसीदेको ह वै नारायण आसीद्" विष्णुस्तदासीद्धरिरेव निष्कलः न वै किञ्चनाग्रे आसीत् दिव्यो देव एको नारायण इति श्रुतिभिरेव परब्रह्मणः श्रीपुरुषोत्तमस्यैकत्वं कारणत्वञ्च निर्णीयत इत्याह—ब्रह्मेति । य ईश्वरो ब्रह्म नारायणपदवाच्य एको जगतः कारणं ताः पूर्वोपदर्शिताः श्रुतयो ब्रह्मनारायणपरा इत्यर्थः एकमेवाद्वितीयं ब्रह्मेति श्रुत्यर्थं विवृणोति तत्रैकमिति तत्र = एकमेवाद्वितीयमितिश्रुतौ।एकपद मेकस्य ब्रह्मणः कारणत्वं विधत्ते अन्ययोगनिषेधार्थक एवकारः तत्समम् = ब्रह्मसमं । निषेधति अद्वितीयपदञ्च तदाधिक्यं ब्रह्मणआधिक्यं निषेधति " न तत्समश्चाभ्यधिकश्च दृश्यते,, इति श्रुतेः " नतत्समोऽस्त्यभ्यधिकः कुतोऽन्य„ इति स्मृतेश्च । प्रागुपर्शितश्रुत्यर्थस्य स्वकपोलकल्पितत्वमिति शङ्कां निराकुर्वन्नाह— इत्येवमिति हि यतः प्रागुपदर्शितोऽर्थः देशिकोत्तमैः । निर्णीतोऽतस्तत्र नाप्रामाण्यशङ्कावकाशः ॥ ४००,४०१,४०२,४०३ ॥

ननु धर्माः परस्योक्ता मायिका सर्वं एव हि ।
शवलब्रह्मणि ज्ञेया शुद्धे किञ्चन्न विद्यते ॥ ४०४ ॥

नेह नानास्ति किञ्चेति श्रुतिरेवहि ब्रह्मणः ।
सर्वस्यान्यस्य मिथ्यात्वे प्रमाणं विद्यते खलु ॥४०५॥
अर्थादात्मानमप्याह मिथ्यात्वमेव सा श्रुतिः ।
सत्त्वं तस्यास्तु द्वैतापत्तिर्भवति निश्चितम् ॥४०६॥
द्वैतापत्तिभयात्तस्य मिथ्यात्वं प्रतिपाद्यते ।
इति तुच्छतरं प्रोक्तं सर्वशास्त्रविरोधतः ॥४०७॥

जगज्जन्मादिकर्तृत्वसर्वज्ञत्वसर्वशक्तित्वेश्वरत्वादिरूपाधर्माः मायोपहितब्रह्मणि विद्यमाना मायिका अविद्योपाधिका ज्ञातव्याः नतु तात्विकाः, ते धर्माः शुद्धे ब्रह्मणि न विद्यन्ते अन्यथा शुद्धत्वं व्याहन्येतेत्यर्थः। ऐतदात्म्यमिदं सर्वं तत्सत्यं आत्मा तत्त्वमसि॥ छा० ६। ४। १। इदं सर्वं यदयमात्मा बृ० २।४।६॥ नेह नानास्ति किञ्चन बृ० २।४।६॥ इत्येवमादयः श्रुतयस्सन्ति ताभिः ब्रह्मव्यतिरिक्तस्य कार्यजातस्य मिथ्यात्वं प्रतिपाद्यते इत्याह-नेहनानास्तीति। हि यतः ब्रह्मणोऽन्यस्य सर्वस्य नेहनानास्तिकिञ्चनेतिश्रुतिर्मिथ्यात्वे मानमस्तीत्यर्थः १५१॥ सा ब्रह्मणि नानात्वनिषेधपरा नेहनानास्तीति श्रुतिः ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वबोधने जीवात्मनोऽपि मिथ्यात्वं निर्वक्ति। तदुक्तं भगवत्पादैर्भाष्यकारै रारम्भणाधिकरणे तदनन्यत्वमारम्भणशब्दादिभ्यः ब्र०सू०२।१।१४॥ इति सूत्रव्याख्याने, एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति। व्योमे च घटकरकाद्युपाध्यनुरोधी। तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्ष्यमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्वञ्च न परमार्थत इति जीवात्मनस्तात्विकत्वे द्वैतापत्तिस्तद्भयादात्मनो मिथ्यात्वं वाच्यमिति परेषां पन्थाः। न तात्विकमैश्वर्य्यं सर्वज्ञत्वञ्च ब्रह्मणः किन्त्वौपाधिकमिति यदुक्तं तद् सर्वशास्त्रविरुद्धत्वादयुक्तमित्याशयेनोक्तमर्थं दूषयति—इति तुच्छतरमिति। सर्वशास्त्रविरोधत इति।

"एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमयः। यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघनः एवायमात्माऽन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एव अत्रायं पुरुषोज्योतिर्भवतिअविनाशी वाऽरे अयमात्मा अनुच्छित्ति धर्मा अथ योऽयं वेद जिघ्राणि, स आत्मा कतम आत्मा योऽयं विज्ञानमयः प्राणः सुहृदन्तर्ज्योतिः पुरुष एव द्रष्टा श्रोता मन्ता बोद्धा विज्ञानात्मा पुरुषः नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादित्येवमादयः श्रुतय आत्मतत्वप्रतिपादिका व्याहन्येरन् निर्विषयत्वात् विधिनिषेधशास्त्रमपि मुमुक्षुजीवात्मसापेक्षत्वात्तदभावे व्याघातः स्यात। मोक्षाभिधायकशास्त्रस्यालीकत्वात्तत्प्रभवमद्वैतज्ञानमसमीचीनं भवेत, नखल्वलीकाद्धूमकेतनज्ञानं समीचीनं भवितुमर्हति। ब्रह्मातिरिक्तस्य सर्वस्यानृतत्वे सर्वो लोकिको वैदकश्च व्यवहारो लुप्येत तस्मात्सद्रूपता विश्वस्य वाच्या- इति भावः। यस्य नाम महद्यशः, अथ नामधेयं सयस्य सत्यं प्राणा वै सत्यं तेषामेषसत्यमित्यादिवचनेन नामरूपयोः सत्यत्वश्रवणान्न मिथ्यात्वम्। ।४०४,४०५,४०६,४०७ नापि परमेश्वरस्य ज्ञानशक्त्यादि धर्माणां व्यावहारिकत्वं वक्तुं शक्यं पराऽस्य शक्तिः विविधैव श्रूयते स्याभाविकी ज्ञानवलक्रियाचेति कण्ठरवेण स्वाभाविकत्वश्रवणादित्याशयेन पराभिमतं निराकरोति—

स्वाभाविकीत्यादिश्रुत्या स्मृतिभिश्चापि कण्ठतः।
तद्गुणानां स्वरूपवदबाध्यत्वं हि गीयते ॥ ४०८ ॥
यदि स्वाभाविकस्यापि बाध्यत्वं भवतोच्यते।
स्वरूपस्यापि किन्तर्हि बाध्यत्वं नोच्यते तथा ॥४०९ ॥

अस्य ब्रह्मणः शक्तिः परा स्वरूपविलक्षणा विविधा अनन्ताऽचिन्त्यप्रकारिका श्रूयतेचेत्यनेनान्यप्रमाणनिरपेक्षा। स्वाभाविकीतिपदमनिर्वचनीयत्वमिथ्यात्वौपाधिकत्वादिशब्दप्रयोक्तृणां मुखं धूलीकरोति। स्वा-

भाविकी, अनाद्यन्तेति स्वरूपवन्नित्येत्यर्थः न केवलं शक्तेरेवतत्वं ज्ञानक्रियागुणानामपीत्याह-ज्ञानेति । ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबल क्रियाचेति चकारः सर्वेषामपि भगवतो गुणकर्मादीनामाकर्षणार्थः स्मृतिभिरिति । शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णतेति श्रीपराशरवचनम् । सर्वभावानाम् = स्वसङ्कल्पविषयवस्तूनां सूक्ष्मतया सद्रूपाणाम् । सर्गाद्याः = सर्गादिकारणम् । भावशक्तय इति । स्वाभाविकीति श्रुतिगतपदस्यार्थः । शतश इति विविधाः पदार्थाः । ब्रह्मण इति पदास्यार्थः । अचिन्त्येति । अचिन्त्यस्य, असङ्कुचितस्यामुक्तानां ज्ञानस्य विषया इति पराशब्दार्थः । तपतांश्रेष्ठेति श्रोतुःकुतर्कनिष्ठतां निवारयति । स्वाभाविकत्वानाद्यनन्तत्वनित्यसहचारित्वादिषु दृष्टान्तः पावकस्येति । इति स्मृत्यर्थः । तद्गुणानाम् = । भगवद्गुणानाम् । हि यतः स्वरूपवद्बाध्यत्वं स्वाभाविकीत्यादिश्रुत्या स्मृतिभिः कण्ठतः गीयते, इतियोजना यथा ब्रह्मरूपो न बाध्यते नित्यत्वात्तद्वत् ब्रह्मगुणशक्त्यादीनां बाधो न भवति । एतेन तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्ष्यमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्वञ्च न परमार्थत इति श्रीशङ्काराचार्य्यपादैरुक्तं निरस्तम् स्वाभाविकीत्यादिश्रुत्या शक्तयः सर्वभावानामिति स्मृत्या च ब्रह्मणः षड्विधैश्वर्यत्वसर्वज्ञत्वसर्वशक्तित्वसद्गुणानां तात्विकत्वबोधनात् । विपक्षे बाधकतर्कमुपन्यस्यति । यदिति । ब्रह्मणः स्वाभाविकानां परमार्थिकानामिति यावत् सर्वज्ञत्वादिधर्माणां बाधः यदि त्वया कल्प्यते तदा ब्रह्मस्वरूपस्यापि बाध स्यादितितर्काकारस्तत्रापाद्यव्यतिरेकनिश्चयेनापादकव्यतिरेकनिश्चयः सिद्ध्यति तथाच ब्रह्मस्वरूपबाध्यत्वाभावनिश्चयेन तद्धर्माणां बाध्यत्वाभावनिश्चय उत्पद्यते स एव तर्कस्य फलम् । ४०८,४०६॥

ब्रह्मधर्माणां बाध्यत्वं न स्वरूपस्येत्यत्र विनिगमकाभावादुभयोस्तुल्यत्व मित्याह—

तुल्यत्वादुभयोस्तस्मात्तवोक्तिस्तव दूषिका ।
मूर्खाणामेव मान्या च नैव शास्त्रविदां क्वचित् ॥ ४१० ॥

उभयोः = ब्रह्मस्वरूपतद्धर्मयोस्तात्विकत्वेन साम्यादेकस्य बाध्यत्वं नापरस्येत्यभ्युपगन्तुमशक्यत्वादुभयोस्तात्विकत्वं त्वयापि वक्तव्यं तथाच ब्रह्मधर्माणां मायिकत्वं तत्स्वरूपस्य तात्विकत्वमिति तदुक्तिस्तवपक्षं दूषयति तात्विकधर्माणां बाध्यत्वे स्वरूपस्यापि बाध्यत्वापत्तिः । ब्रह्म धर्माणां बाध्यत्वं न स्वरूपस्येति तवोक्तिः शास्त्रानभिज्ञानामेव मान्या न तु शास्त्रतत्त्ववेत्तॄणां कदापि ४१० ।

एवं ब्रह्मधर्माणां तात्विकत्वं निरूप्य सम्प्रति शवलब्रह्मणो ज्ञेया इत्युक्तं तन्निरस्यति—

शवलत्वादिभावस्तु ब्रह्मणो नोपपद्यते ।
शास्त्रे कुत्रापि नैवोक्तो ललाटे लिखितस्तव ॥४११॥
वेदस्यापि मिथ्यात्वं भवतां सम्मतं यदि ।
तदेश्वरोऽपि जीवस्य कल्पितोऽपि भवन्मते ॥४१२॥
निश्चितो मायिकत्वेन मयावादिभिरीश्वरः ।
ज्ञानेन जीवध्वंसे खपुष्पतुल्यतां गते ॥ ४१३ ॥
ईश्वरोऽपि पुनस्तद्वत् कल्पितत्वाद्विनश्यति ।
इत्थं वेदेश्वरे नष्टे सिद्धा बौद्धानुयायिता ॥ ४१४ ॥
यद्वेदेश्वरयोर्नित्यसत्यत्वप्रतिपादनम् ।
आस्तिकत्वं प्रसिद्धं तल्लोके शास्त्रे च नान्यथा ॥४१५॥

सर्वज्ञत्वसर्वशक्ति सत्यसङ्कल्पादि धर्माः शवले, मायाविशिष्टेब्रह्मणि विद्यन्ते नतु शुद्ध इति प्रागभिहितस्तदा सेत्स्यति यदि ब्रह्मणः

शवलत्वादिधर्मा शास्त्रोपदिष्टास्स्युः नैतेधर्माः कुत्रापि वेदान्तशास्त्रे उपलभ्यन्ते तस्मात् सर्वज्ञत्वादयो धर्मास्तात्विकाः परब्रह्मण्येव सम्पद्यन्ते इति सिद्धम् । भवतां नये परब्रह्मणस्सत्यत्वावधारणात्तदितरस्य सर्वस्याप्याविद्याकल्पितत्वेनानृतत्वाभिधानात् वेदस्य तदुपदिष्टगुरुशिष्य भावस्यान्तःकरणावच्छिन्नस्य जीवस्य मायावच्छिन्नचैतन्यात्मकेश्वरस्य च मिथ्यात्वं सिद्ध्यतीत्याशयेनाह—वेदस्येति । भवतां राद्धान्ते वेदस्य जीवस्य च यदि मिथ्यात्वमुररी क्रियते तदा भवन्मत ईश्वरस्याप्यविद्याकल्पितत्वाविशेषान्मिथ्यात्वं वाच्यमित्यर्थः । मायावादिभिरविद्याकृतनामरूपोपाधीश्वरो मानन्तु महेश्वरमिति वचनम् मायिकत्वेन निर्धारितः । ब्रह्मज्ञानेन काल्पनिके जीवे नष्टे कल्पितत्वादीश्वरोऽपि विनश्यति तथाच सर्वविनाशे बौद्धपक्षानुयायिता सिद्ध्यति सर्वनाशमिच्छतस्तव बौद्धात्को वा विशेष इति वक्तव्यमिति भावः । ये च वेदस्य नित्यत्वमीश्वरस्य सत्यत्वमभ्युपगम्यन्ते अस्मिं लोके शास्त्रे चास्तिकत्वेनप्रसिद्धा ये च वेदमीश्वरञ्च मिथ्यात्वं मन्यन्ते ते नास्तिका एवेत्यर्थः ४११ ४१२ । ४१३ । ४१४ । ४१५ ।

अथ चेत्सम्मतः कालत्रयावाध्यस्त्वयेश्वरः ।
वेदोऽपि सत्य एव स्यादास्तिकत्वं भवेत्तदा ॥४१६॥
सिद्धान्तस्तुपरित्यक्तः स्वीकारात्सविशेषतः ।
अस्मन्मते प्रवेशश्च द्वैतापत्तिरबाधिता ॥ ४१७ ॥
तस्मादुभयतः पाशारज्जुप्राप्तिस्तवैवहि ।
अतो विवर्त्तवादो वै दूराद्धेयो मुमुक्षुभिः॥ ४१८ ॥
श्रुत्यर्थस्तूक्त इथं वै ह्याचार्य्यैर्वेदवित्तमैः ।
नानात्वं कारणे नास्ति कारणैकत्वनिश्चयात् ॥ ४१९ ॥

यदि कालात्रयावाध्यत्वमीश्वरस्य वेदस्य तात्विकत्वञ्चाभ्युपेयते

तदाऽऽस्तिकत्वं सम्पद्येत तथासति ब्रह्मणः सविशेषत्वे निर्विशेष—चिन्मात्रं ब्रह्मेति तव सिद्धान्तो व्याहन्येत अस्मत् सिद्धान्ते प्रविष्टा श्च भवन्तः। यदि ब्रह्मणि कालत्रयावाध्यत्वधर्मस्य वेदे तात्विकत्वस्य चाभ्युपगमे तदा द्वैतस्य प्रसक्तिरवाधिता स्यात् यदि परब्रह्मणि कालत्रयावाध्यत्वरूपं सत्यत्वमभ्युपेयते तदाऽशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैव परमार्थः तदतिरिक्तनानाविधभोक्तृभोक्तव्यादिभेदप्रपञ्चः सर्वोऽपि तस्मिन्नविद्यया परिकल्पित इति तव पन्था भग्नः स्यात्। यदीश्वरस्येशयितृत्वं वेदस्य सत्यत्वं पारमार्थिकं नोररीक्रियते तदा भवतां नास्तिकत्वं प्रसज्ज्येत सेयमुभयतः पाशारज्जुप्राप्तिः। तद्विनिर्मुक्तये विवर्तवादो हेय इत्यर्थः। 'नेहनानेति किञ्चनेति श्रुत्यर्थं पूर्वाचार्यैप्रदर्शित माह—श्रुत्यर्थस्त्विति। इह जगत्कारणे ब्रह्मणि नानात्वं नास्ति तस्य सर्वास्वुपनिषत्स्वेककारणत्वावधारणादित्यर्थः ननु कारणे ब्रह्मणि भेदाप्रसक्तिरप्रसक्तस्य निषेधायोगादिति चेन्न जगत्कारणेऽनेकत्वप्राप्तेः शास्त्रसिद्धत्वात्। "जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः। जीवे प्रलयमृच्छन्ति न जीवात्कारणं परम्" ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता'न सन्नचासच्छिव एव केवलः," स्वभावमेके कवयो वदन्ति कालं तथान्यैरित्यादि श्रुतिभिः कारणे नानात्वस्य सुप्रसक्तत्वात् .इहेति विशेषणान्नानात्वमात्रनिषेधसम्भवो निषेवतदाधार ब्रह्मणोर्निषेध्ययोर्नानात्वतदभावयोश्च भेदावश्यकत्वादिति भावः। ४१६ ४१७। ४१८। ४१६॥

अथवा ब्रह्मरुद्रादिनानात्वं प्रतिषेधति ।
श्रुतिस्तस्मादयं चार्थो व्यासस्यैव हि सम्मतः॥ ४२०॥
यतस्तेन नहि क्वापि मिथ्यात्वं प्रतिपादितम् ।
ब्रह्मादीनान्तु कृष्णाद्यावरस्यैव निश्चयात् ॥ ४२१ ॥

नानाशब्दोऽत्रविनार्थकः "विनञ्भ्यां नानाञौ नसहेति" सूत्रे महाभाष्यकारै र्नानाविनाशब्दयोरेकार्थत्वोक्तेः, तथाचैवं योजना इह जगति नाना स्वोपादानसर्वेश्वरं विना किञ्चिदपि वस्तुजातं नास्ति सर्वकार्यत्वावच्छिन्नस्य स्वोपादानविनाभूतत्वात्, "यच्चापि सर्वभूतानां वीजं तदहमर्जुन न तदस्ति विना यत् स्यान्मयाभूतं चराचरमितिश्रीमुखोक्तेरित्याशयेन " नेह नानास्तिकिञ्चनेति" श्रुतेरर्थान्तरमाह—अथवेति। आब्रह्मस्तम्बपर्यन्तव्यापकेनमया विना यत् स्यात्तच्चरमचरं वा वस्तु नास्त्येव सर्वस्य मदविनाभावात् ब्रह्मरुद्रेन्द्रचन्द्रादीनां मद्व्यतिरिक्तं नानात्वं प्रतिषेधति नेह नानास्तीति श्रुतिः। स कारणं कारणाधिपाधिप-इति श्रुत्या सर्वकारणकारणत्वं ब्रह्मणि निश्चीयते तस्मात् वेदेश्वरयो-र्नित्यसत्यत्वप्रतिपादनात् प्रागुपदर्शितार्थः श्रीभगवान् व्यासाचार्य—सम्मतः हीतिनिर्धारणे। तत्र हेतुं निर्वक्ति—यत इति। वेदस्य नित्यत्वात् ईश्वरस्येशितृत्वसर्वज्ञत्वादीनां सत्यत्वाच्च। तेन श्रीव्यासाचार्येण वेदेश्वरयोर्मिथ्यात्वं कुत्रापि शास्त्रे नोक्तम्। ब्रह्मरुद्रादीनां यत् जगत्कारणत्वं कैश्चिदुच्यते तन्निरसितुमाह-ब्रह्मादीनामिति। ब्रह्मरुद्रजनकस्तदुपदेष्टृ-त्वसर्ववुध्यादिप्रवर्त्तकत्वसर्वशरण्यत्वादिधर्मविशिष्टाच्छ्रीकृष्णाद्ब्रह्मादीनामवरत्वं "यो ब्रह्माणं विदधाति पूर्वमित्यादिमन्त्रैर्निश्चीयते। अतो न तेषां जगज्जन्मादिकारणत्वमुपपद्यत इत्यर्थः। ४२०,४२१॥

**तस्मात् स्वशक्तिविक्षेपलक्षणं ब्रह्मणो जगत्।**
**कार्यं तत्परिणामाख्यं वैदिकानां हि सम्मतम्॥ ४२२॥**
**परिणामः स्वरूपे तु नास्माभिरूररीकृतः।**
**आत्मकृतेः परिणामादितिसूत्रेण सन्मतः॥ ४२३॥**

समवाय्यसमायिनिमित्तकारणात्कार्यमुत्पद्यत इत्यारम्भवादो तार्किकाणामभिमतः। कारणानां समुदाय एव कार्यं नतु कारणादति-

दिक्तं कार्यं नाम किञ्चिदिति सङ्घातवादः सौत्रान्तिकानां वैभाषिकाणां बौद्धानाम्। अयञ्च सङ्घातः प्रतिक्षणं नव नव उत्पद्यते। उपादानकारणञ्च स्वविनाशद्वारैव कार्योत्पादकं भवति। बौद्धविशेषा शून्यवादिनो माध्यमिकास्तु न कार्यस्य सद्रूपं कारणं किञ्चित् किन्त्वसदेव प्रतिक्षणं भासत इति वदन्ति विज्ञानवादिनस्तु विज्ञानरूप आत्मैव प्रतिक्षणं नवनवेन वाह्येन घटादिरूपेण भासत इति मन्यन्ते। अतात्विकः कारणान्यथाभावकार्यमित्येष विवर्त्तवादः श्रीशङ्कराचार्यमतानुसारिणाम्। परिणामो द्विविधः। प्रकृतिस्वरूपपरिणामः, शक्तिविक्षेपलक्षणो ब्रह्मपरिणामश्चेति आद्य : साङ्ख्यपक्षो द्वितीयस्त्वौपनिषदानां सिद्धान्त श्चेत्याशयेनाह। तस्मादिति। ब्राह्मणइतितदर्थःजगत्कारणत्वादितिब्राह्मणोकार्य जगत्शक्तिविक्षेपलक्षणंमितियोजना। किन्तावच्छाक्तविक्षेपस्वरूपमिति जिज्ञासायामाह। तत्परिणामाख्यमिति शक्तिपरिणामाख्यं वैदिकानां सम्मतं हि = यतः वैदिकसिद्धान्तत्वात् स्वरूपे परिणामो नास्माभि रभ्युपेयते, उक्तार्थे सूत्रकारसम्मति माह-आत्मकृते रिति। "तदात्मानं स्वयमकुरुत"इतिसृष्टेः कर्तृत्वं कर्मत्वञ्च ब्रह्मणः श्रूयते तत्राव्याकृतरूपेण कर्तृत्वं व्यक्तनामरूपत्वेनच कर्मत्वं कार्यकारणयोस्तादात्म्यात्तत्र हेतुः परिणामात परिणामोऽत्रशक्तिविक्षेपरूपो नतु स्वरूपपरिणाम स्तस्मान्न विकारसम्भावनावकाशइति सूत्रार्थः। ४२२। ४२३॥

परिणामो ऽत्र शक्तिविक्षेप इत्यत्रप्रमाणं दर्शयति—

प्रधानं पुरुषश्चापि प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ।४२४॥

अत्र क्षोभशब्देनेशशक्तिविक्षेपश्च श्रीपराशरेणोक्तः देवदत्तस्य चेतसि क्षोभो यज्ञदत्तस्य मनसि विक्षेप इति पर्य्यायत्वप्रसिद्धेः। ४२५॥

इत्युक्त क्षोभशब्देन पराशरेण वैष्णवे।
प्रसार्य्य च यथाङ्गानि कूर्मः संहरते पुनः ॥४२५॥

तद्वद्भूतानि भूतात्मा सृष्टानि ग्रसते पुनः ।
इति भीष्मेण कण्ठोक्त्या विक्षेपः प्रतिपादितः ॥४२६॥

प्रधानं पुरुषञ्चापीत्यादिना पर्यायमुखेनोदाहृत्य तत्कल्पनानिरासाय साक्षात् शक्तिविक्षेप प्रतिपादकं महाभारतवचनं पठति प्रसार्य्येचेति—

ऊर्णाप्रसारणाकुञ्चनार्हताशक्तिमान्यथा ।
ऊर्णनाभः सृजत्यूर्णा मसहायः स्ववक्त्रतः ॥ ४२७ ॥
निगृह्णाति स्वयं पश्चान्निर्विकारश्च तिष्ठति ।
यथा च पुरषादन्नमयादप्रच्युतात्मनः ॥४२८॥
नखलोमानि जायन्ते तावच्छक्तिमतः सतः ।
पृथिव्याश्च यथा तावच्छक्तिमत्त्या अनेकशः ॥४२९॥

यथोर्णनाभिः सृजते गृह्णतैच यथा सतः पुरुषात् केशलोमानि । यथा पृथिव्या औषधयः सम्भवन्ति तथाक्षरात् सम्भवतीह विश्वमिति श्रुत्यर्थ विवृणोति –ऊर्णेति । यथोर्णनाभे रूर्णाप्रसारणाकुञ्चनोभयार्हता-लक्षणशक्तिमत उर्णाविर्भावतिरोभावौ तद प्रच्युतस्वरूपतयैव भवतः । यथा च पुरुषादन्नमयात तन्मात्रशक्तिमतः केशलोमानामुत्पत्तिमात्र-कार्यसिद्धिः यथा च भूमेस्तथाभूतशक्तिमत्या औषधीनां जन्ममात्रम् । तथा सर्वकार्योत्पादनलक्षणाचिन्त्यानन्तसर्वशक्तेरक्षरपदार्थाद ब्रह्मणो विश्वं सम्भवति । यदा स्वस्वाभाविकाल्पाधिकसातिशयशक्तिमद्भ्यो ऽचेतनेभ्य स्तच्छक्त्यनुसारेण स्वस्वकार्यभावपत्तावप्यप्रच्युतस्वरूप-त्वाभावाभावः प्रत्यक्षगोचरत्वेनापह्नोतुमशक्य स्तर्ह्य चिन्त्यसर्वाचि-न्त्यविश्वाख्यकार्योत्पादनार्हशक्तिमतो भगवतो जगद्भावापत्तावप्यप्रच्यु-तस्वरूपत्वं किमशक्यमिति समुदितार्थः । ४२७, ४२८, ४२९ ॥

औषधयो हि जायन्ते स्वयं श्चाखण्डिताः स्थिताः ।
तथा स भगवान् कृष्णो ह्यचिन्त्यानन्तशक्तिमान् ।।४३०।।

स्वस्मादेव समुत्पाद्य जगदेतच्चराचरम् ।
मध्ये पाल्य च संहृत्य सर्वात्मा हि स्वयंप्रभुः ।।४३१।।

दोषास्पृष्टस्वभावत्वान्न तद्धर्मैं स्तु लिप्यते ।
स्वस्वाभाविकशक्तीनां चेतनाचेतनात्मनाम् ।।४३२।।

सूक्ष्मावस्थागतानां यः स्थूलत्वेन प्रकाशकः ।
तत्र तत्रस्थसद्रूपकार्याणाञ्च पृथक् पृथक् ।।४३३।।

स उपादानमित्युक्तो वेदान्तार्थप्रकाशकैः ।

अचिन्त्यशक्तिमत्पृथिव्या औषधयो जायन्ते, स्वयञ्चाप्रच्युत-स्वरूपस्थिताः। अचिन्त्यानन्तशक्तिमान् षड्विधैश्वर्य्यसम्पन्नः श्रीकृष्ण स्तस्मादेतज्जगदुत्पद्यते सर्वात्मा—सर्वेषां प्राणिनामन्तरात्मा सर्वसमर्थः विश्वं पालयति संहरति च स्वभावतो ऽपास्तसमस्तदोषत्वाज्जगद्ध मैंर्न लिप्यते परापरक्षेत्रज्ञादिपदार्थभूतस्वस्वभाविकीनां सूक्ष्मावस्था-पन्नानां शक्तीनां तत्तद्गतसद्रूपकार्याणां स्थूलतया प्रकाशकत्व मित्युपा-दानकारणस्यलक्षणं निर्वक्ति-स्वस्वभाविकेति । स्वस्यं परब्रह्मणोऽसा-धारणानां स्वाभाविकीनां प्रलये सूक्ष्मावस्थापन्नानां कार्यविस्तारणव्यापा-रानर्हाणां शक्तीनां परापरक्षेत्रक्षेत्रज्ञादिशब्दवाच्यानां तत्र तत्रस्थस द्रू-पकार्याणाम् स्वावान्तरकारणभूतशक्तिस्थभावरूपसूक्ष्मतापन्नकार्या-णाम्। पृथक्पृथक् स्थूलत्वेन यः प्रकाशकः स उपादानकारणशब्दवाच्यः अयमर्थो वेदान्तार्थप्रकाशकैः स्वपूर्वाचार्य्यै रभिहितः। एतेन स्वोत्प्रे-क्षितत्वमस्योपादानलक्षणस्येति निरस्तम्। कार्यस्य सद्रूपत्वञ्चारम्भणा-धिकरणस्थसूत्रैर्द्रष्टव्यम्। तानि तुभावे चोपलब्धेः सत्वाच्चाव-रस्य ९। असद्व्यपदेशा दिति चे न्न धर्मान्तरेण वाक्यशेषात् ।३ युक्तेः शब्दान्तरा च ४। पटवच्चेति ।५। ४३०। ४३१।

निमित्तकारणलक्षण माह—

स्वानादिकर्मसंस्कारवशीभूतात्मनां ततः ॥४३४॥
अतिसङ्कुचितस्मृत्यनर्हधीनां चिदात्मनाम् ।
स्वकर्मफलभोगार्हज्ञानप्रकाशेन यत् ।
तत्कर्मफलभोगसाधनैः सह विविधैः ॥४३५॥
तान्संयोजिता वै स निमित्तं हि कारणम् ।
कारणत्व उभे ब्रह्मण्येव सङ्गच्छतःपरे ॥४३६॥
स्वरूपलक्षणं ह्येतज्जगत्कारणताहरेः ।
कार्यसापेक्षमित्युक्तं सत्यादेस्त्वनपेक्षता ॥४३७॥

कारणत्वं नाम कार्योत्पत्तिप्राक्कालीननियतसम्बन्धाश्रयत्वं तद्द्विविधं निमित्तोपादानभेदात् तत्र निमितत्वं नाम कार्योत्पत्यनुकूलज्ञान चिकीर्षाकृतिमत्त्वे सति तद्व्यापाराश्रयत्वम् । इत्याह स्वानादीति। स्वस्य स्वस्य नियतविभक्तानादिविचित्रकर्मसंस्कारस्यपरतन्त्राणामत्य-न्तसङ्कुचितोऽतएव भोगस्मरणानर्हो ज्ञानलक्षणोधर्मो येषां तेषां क्षेत्र-ज्ञानां कर्मोन्मुख्यभवनतत्फलभोगार्हधर्मभूतज्ञानप्रकाशेन तत्तत्कर्म-फलैस्तेषां'तेषाफलानां भोगयोग्यशरीरेंद्रियादिकरणैः सह सम्बन्धकारयि-तृत्वंनिमित्तकारणत्वम्। उपादानं निमित्तञ्च ब्रह्मैवेत्याह-कारणत्व इति। जगदभिन्ननिमित्तोपादानत्वे सति सत्यादिमत्त्वं ब्रह्मणो लक्षणा-मित्याहस्वरूपेति । ४३४।४३५ ४३६।४३७ ।

ब्रह्मपदार्थं निर्वक्ति—

स्वरूपेण गुणैश्चापि वृहत्तमं हि वस्तु यत् ।
ब्रह्मशब्दस्य तद्वाच्यमितिसिद्धं प्रमाणतः ॥४३८॥

एवं बृहत्तमःशास्ते कृष्ण एव निरूपितः ।
स एव सततं ध्येयो जिज्ञास्योऽपि मुमुक्षुभिः ॥४३९॥
यथोर्ण नाभिरित्यादिश्रुतिरेव सनातनी ।
प्रमाणं विद्यतेऽस्माकं स्मृतयोप्यनेकशः ॥४४०॥
उपादानं निमित्तश्च ब्रह्मैकं न तु ये विदुः ।
अवैदिकाहि ते ज्ञेयाः श्रुतित्यागादिति स्थितम्॥४४१॥

हि यतः यत् वस्तुस्वरूपेण गुणैश्च बृहत्तमं तत् ब्रह्मशब्द-वाच्यमितियोजना प्रमाणमिति । बृहति बृंहयति ब्रह्मेत्यादिश्रुतिः । हरिवंशे शिवः- बृहत्वाद्बृंहणात्वाच्च यस्माद्ब्रह्मेति शब्दित इति । वैष्णवेऽपि श्रीध्रुववाक्यम्- बृहत्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितमिति । तथाचोक्तेभ्यो हेतुभ्यो योगरुढिप्रवृत्तेरपि सौकर्यं ज्ञातव्यम् इत्थं शक्त्यसम्भवो निरस्तः। स्वरूपेण गुणैश्च बृहत्तमः रमानिवासः श्री-कृष्ण एव शास्त्रे प्रतिपादितः श्रीकृष्ण एवानवरतं मुमुक्षुभिः ध्येयः जिज्ञासासूत्रोक्तेष्यमाणज्ञानविषय इत्यर्थः। ब्रह्मैवाभिन्ननिमित्तोपादान कारणमित्यभ्युपगमे जगतो ब्रह्मपरिणामभाव इति शङ्कामपनेतु-माह । यथेति । यथोर्णनाभिः सृजते गृह्णते च यथा सतः पुरुषात् केश-लोमानि । यथा पृथिव्या औषधयः सम्भवन्ति तथाक्षरात् सम्भवतीह विश्वमितिश्रुतिः यथार्णनाभेरूर्णा प्रसारणाकुञ्चनोभयार्हतालक्षणशक्ति-मत ऊर्णाविर्भावतिरोभावौ तदप्रच्युतस्वरूपतयैव भवतः, यथा च पुरुषादन्नमयात् तन्मात्रशक्तिमतः केशलोमानामुत्पत्तिमात्रकार्यसिद्धिः। यथाच भूमेस्तथाभूतशक्तिमत्या औषधीनां जन्ममात्रम्, तथा सर्वकार्योत्पादनलक्षणाचिन्त्यानन्तसर्वशक्तेरक्षरपदार्थाद्ब्रह्मणो विश्वं स-म्भवतीत्यर्थः। यदा स्वस्वस्वाभाविकालपाधिकसातिशयशक्तिमद्भ्योऽचे-तनेभ्योयस्तच्छक्त्यनुसारेण स्वस्वकार्यभावापत्तावप्यप्रच्युतस्वरूपत्वाभा-

वाभावः प्रत्यक्षगोचरत्वेनापह्नोतुमशक्यस्तर्ह्यचिन्त्यसर्वाचिन्त्यविश्वाख्यकार्योत्पादनार्हशक्तिमतो भगवतो जगद्भावापत्तावप्यप्रच्युतस्वरूपत्वं किमशक्यमिति श्रुतेर्ध्वनितार्थः। न तावत्तर्कबलेन ब्रह्मपरिणामाभ्युपगमोऽपितु स्वयमात्मानमकुरुत, आत्मकृतेः परिणामादित्यादिश्रुतिन्यायाभ्याम्, नापि कृत्स्नप्रसक्तिः। ऊर्णनाभ्यादौ व्यभिचारात्। नापि निरवयवश्रुतिव्याकोपः। तथाभूतपरिणामस्य निरवयवाना मक्षरावयवानां परिणामप्रतिपादनरीत्या साधितत्वात् वस्तुतस्तु शक्तिविक्षेपस्यैव परिणामशब्देन विवक्षिततया ब्रह्मस्वरूपपरिणामानभ्युपगमान्ननित्यश्रुतिविरोधगन्धोऽपीति भावः। ये तु ब्रह्मणो विश्वं प्रति केवलनिमित्तकारणत्वं मन्यते तान्प्रत्याह—उपादानमिति। अभिन्ननिमित्तोपादानकारणत्वं ये ब्रह्मणो नानुन्मन्यन्ते ते वेदबाह्यत्वादुपेक्ष्याः स्वयमात्मानमकुरुत, आत्मकृतेः परिणामादितिश्रुतिन्यायपरित्यागादित्यर्थः। ४३८। ४३९। ४४०। ४४१॥

तस्मात्कृष्णः परं ब्रह्म सत्यज्ञानादिरूपकः।
अचिन्त्यानन्तशक्तिश्च कल्याणगुणसागरः॥४४२॥
जगतः कारणं मुख्यं ब्रह्मरुद्रादिसेवितः।
सर्ववेदान्तवेद्यश्च सर्वशास्त्रसमन्वितः॥ ४४३॥
ध्येयो मुमुक्षुभिश्चैक इति शास्त्रस्य निर्णयः।
इतितत्पदार्थपरमात्मतत्वनिरूपणम् ॥ ४४४ ॥

उक्तार्थं निगमयति—तस्मादिति जगत्कारणमिति। अभिन्ननिमित्तोपादानत्वेसतिसत्यत्वादिमत्त्वं ब्रह्मलक्षणम्। एतेन जन्माद्यस्ययत इति सूत्रार्थो ध्वनितः। सर्ववेदान्तवेद्य इति। तन्त्वौपनिषदं पुरुषं पृच्छामि सर्वे वेदा यत्पदमामनन्ति, नमो वेदान्तवेद्यायेत्यादिश्रुतिः वेदैश्चसर्वैरहमेव वेद्य नतास्म सर्ववचसां

प्रतिष्ठा यत्र शाश्वतीत्यादिस्मृतिश्चोक्तार्थे मानम्। एतेन शास्त्रयो-नित्वादितिसूत्रार्थो विवृतः। शास्त्रैकप्रमाणकत्वेसति तदन्यप्रमाणा-गोचरत्वादितिसूत्रार्थः। सर्वशास्त्रसमन्वित इति सर्वशास्त्राणां सम्यग्वाच्यतयाऽन्वितः समन्वितः ब्रह्मप्रतिपादनपरत्वेन समन्वितानि वेदान्तवाक्यानित्यर्थः। यतो वा इमानि भूमानि जायन्ते, एतस्माज्जाते प्राणो मनः सर्वेन्द्रियाणि च सदेवसोम्येदमग्र आसीत्, एकमेवाद्वि-तीयं ब्रह्म, तदैक्षत बहुस्यां प्रजामेय, नारायणाज्जायते प्राणः, ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्सर्वम-भवत्। यः सर्वज्ञः सर्वविदित्यादीनि वाक्यान्यनुसन्धेयानि। यतः समन्वितश्च वेदान्ते वाच्यतया भगवान् श्री पुरुषोत्तमस्तस्मादेव जिज्ञासाविषयः मुमुक्षुभिर्ध्येयश्चेत्यर्थ। ३४२। ३४३। ३४४॥

इतितत्पदार्थपरमात्मतत्त्वनिरूपणविवरणम्॥

अधुनाचार्य्यप्रणीतप्रकारेण समासतः॥ ४४५॥
जगतो ब्रह्मणा सार्द्धं भेदाभेदौ निरूप्यते।
भोक्ताभोग्यं नियन्तेति त्रैरूप्यश्च यथार्थकम्॥ ४४६॥
ज्ञाता ज्ञेयं तथा ज्ञानमेवं ध्यात्रादिकं त्रिकम्।
श्रुतिभिः स्मृतिभिश्चैव सर्वज्ञैः सम्प्रकीर्त्तनात्॥ ४४७॥
सूत्रकारेण जिज्ञासासूत्रेणापि प्रकीर्त्तनात्।
एकत्वात् व्यापकत्वाच्च ब्रह्मणः सर्ववस्तुषु॥ ४४८॥
नानात्वादणुरूपत्वाद्व्याप्यत्वात् प्रत्यगात्मनाम्।
श्रुतिषु श्रवणादेवं भेदः स्वाभाविकस्तयोः॥ ४४९॥

आचार्य्यैः श्रीसनत्कुमारनारदव्यासप्रभृतिभिः प्रणीतः यःप्रकारस्तेन समासतः सङ्क्षेपतः चेतनाचेतनयोर्ब्रह्मणा सह स्वभाविक-

भेदाभेदः संसर्गः सम्प्रति निरूप्यते। भोक्ता प्रत्यगात्मा। सोऽयम्, अचिद्वस्तु । नियन्ता नियमनकर्ता सर्वेश्वरः। भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मह्येतत। प्रधानक्षेत्रज्ञपतिर्गुणेशःनित्यो नित्यानां चेतनश्चेतनानां गौरनाद्यन्तवती त्याद्याःश्रुतयः प्रकृतिं=पुरुष ञ्चैव विद्ध्यनादी उभावपि। क्षेत्रक्षेत्रज्ञयोर्ज्ञानम्। द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते। नत्वेवाहं जातुनासम्, अश्वत्थं प्राहुरव्ययमित्याद्याः स्मृतयश्च सन्ति ताभिस्त्रिरूपता निश्चीयते अथातो ब्रह्मजिज्ञासेतिसूत्रस्य जिज्ञासु-र्जिज्ञासाजिज्ञास्यरूपताप्रतिपादनपरत्वादित्यर्थः। जीवेशयोः न स्वरूपेण भेदः इतरेतरात्यन्तविलक्षणत्वादित्याह-एकत्वादिति। ब्रह्मणःसर्ववस्तुषु व्यापकत्वाच्च सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्त्वसर्वाधार त्वादियोगेन ब्रह्मणो भिन्नत्वं प्रत्यगात्मनामित्यर्थः। एकत्वादिति। ब्रह्मणः एकत्वात प्रत्यगात्मनां नानात्वादणुरूपत्वाद्व्याप्यत्वाच्च जीवेशयोः स्वाभाविको भेदः श्रूतिषु श्रूयते तथाहि एकमेवाद्वितीयं ब्रह्म यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयते ऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्ये नारायणः स्थितः अणुर्वाह्येष आत्मा यं वा एते सिनीतः पुण्यपाप-मित्यादिश्रुतयोऽत्रानुसन्धेयाः। अधिकन्तु भेदनिर्देशात्। भेदव्यप-देशाच्चान्यः। अंशो नानाव्यपदेशादित्यादिसूत्रैश्च जीवेशयोः स्वाभा-विको भेदः व्यपदिश्यते तस्मात्सिद्ध जीवब्रह्मणोःस्वाभाविको भेद इति तयोः=जीवेशयोः। ४४५। ४४६। ४४७। ४४८। ५४९।

**स्थूलत्वपरिणामित्वव्याप्यत्वादेश्च योगतः।**
**अचेतनपदार्थस्य ताभ्यां भेदः स्वरूपतः॥ ४५० ॥**
**ब्रह्मणश्चेतनानाञ्चाचेतनस्य परस्परम्।**
**भेद एव स्वरूपेण सिद्ध्यत्येवं हि सर्वदा॥ ४५१ ॥**

अन्यथा तत्स्वभावस्य साङ्कर्यं स्यान्न संशयः ।
तस्मात्स्वाभाविको भेदस्त्रयाणामेव निश्चितः ।। ४५२ ।।
अथाभेदोऽपिविज्ञेयः स्वाभाविकस्तथोच्यते ।
सर्वं ब्रह्मात्मकं वस्तु श्रुतिस्मृत्येति भण्यते ।। ४५३ ।।

भेदो व्यपदिश्यते तस्मात्सिद्धं जीवब्रह्मणोः स्वाभाविकोभेद इति ताभ्याम् = जीवेशाभ्याम् । अचेतनस्य स्थूलत्वेन परिणामित्वेन व्याप्यत्वेन च निर्देशार्हत्वमतो जीवेशाभ्यां स्वरूपतो भेदः ॥ ब्रह्मणश्चेतनाचेतन योश्चस्वरूपेण भेदः;इतरेतरात्यन्तविलक्षणत्वा.त् अस्थूलमनण्वित्यादिश्रुतेः तत्र चेतनस्याणुत्वेन निर्देशार्हत्वम् अचेतनस्य स्थूलत्वेन ब्रह्मणस्तयो वैलक्षण्येनेति विवेकः अचेतनानामपि परस्परं स्वरूपेण भेदः। स चभेदः सर्वावस्थायां वर्तत इतिवोधयितुं सर्वदेत्युक्तम् ।विपक्षे वाधकतर्कमुपन्यस्यति - अन्यथेति । जीवेशयोः स्वाभाविकभेदानङ्गीकार इति तदर्थः स्वभावसाङ्कर्यमिति । साङ्कर्यञ्च भोक्तरि भोग्यत्वनियन्तृत्वयोः समावेशः भोग्ये भोक्तृत्वनियन्तृत्वयोः . नियन्तरि भोक्तृत्वभोग्यत्वयोः समावेशोऽनुसन्धेयः ।जीवगतागुणा ज्ञातृत्वादयो भोग्यवर्गेऽचेतनभूते ब्रह्मणि च प्राप्नु युः ब्रह्मधर्माः सार्वज्ञ्यनियन्तृत्वशास्त्रयोनित्वादयो जीबात्मनि भोग्यबस्तुनि चेति महद् दूषणकदम्बपात इति निर्गलितार्थः। उक्तार्थं निगमयति-तस्मादिति । त्रयाणाम् = जीवेशाचेतनानाम् । जीवब्रह्माचेतनानां परस्परं भेदं निरूप्य सम्प्रति त्रयाणामभेदोऽपि स्वाभाविक इति निरूप्यते। अथेति। एषसर्व भूतान्तरात्मा एषतेआत्माऽन्तर्याम्यमृतः एषमे आत्माऽन्तर्यामीतिश्रुतेः आत्मेतितूपगच्छन्ति ग्राहयन्तिचेति न्यायाच्च अहमात्मा गुडाकेशसर्वभूताशयस्थितः इन्द्रियाणि मनोवुद्धिः सत्त्वं तेजोवलं धृतिः वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एवच इतिस्मृतिभ्यश्च सर्वस्य चेतनाचेतनभूतस्य जगतो ब्रह्मात्मकत्वं निश्चीयत इत्यर्थः। ४५०, ४५१, ४५२, ४५३ ॥

ऐतदात्म्यमिदं सर्वमित्यादि श्रुतिभिस्तथा।
अहमात्मागुडाकेशे त्यादिस्मृत्या प्रकीर्तितम् ॥४५४॥
ब्रह्मात्मकत्वतो विश्वं ब्रह्माभिन्नं प्रचक्षते।
यच्च यदात्मकं वस्तु तत्तदभिन्नमुच्यते ॥४५५॥
सुवर्णाभिन्नमेवेह कुण्डलं दृश्यते यथा।
मृदात्मको घटो यद्वन्मृदभिन्नोहि दृश्यते ॥३५६॥
तथा ब्रह्मात्मकं विश्वं ब्रह्माभिन्नं हि सर्वदा।
अपृथक्सिद्धतायाश्च दृष्टान्तोऽयं प्रदर्शितः ॥३५७॥

सर्वस्य वस्तुनो ब्रह्मात्मकत्वं समर्थयति। श्रुतिस्मृतिमुखेन ऐतदात्म्यमिति। सर्वमिदं चिदचिन्मात्रं ऐतदात्म्यं ब्रह्मात्मकमित्यर्थः तथा = ब्रह्मात्मकम् ब्रह्मात्मकत्वाद्विश्वं ब्रह्माभिन्नं प्रचक्षते व्याप्तिमभिनीय दर्शयति। यच्चेति। उक्तार्थं दृष्टान्तेन परबुद्धयारूढं करोति। सुबर्णेति। दार्ष्टान्ते योजयति-तथेति। यदंशे दृष्टन्तता तमंशं दर्शयति। अपृथगिति। यथा कुण्डलं सुवर्णापृथक्सिद्धं तथा विश्वं ब्रह्मापृथक्सिद्धमित्यर्थः। ४५४ ४५५ ४५६ ४५७॥

अपिच ब्रह्म बिश्वस्य व्यापकं शास्त्र उच्यते।
विश्वं तद्व्याप्यमेवातस्तदभिन्नं प्रकीर्तितम् ॥४५८॥
अग्निव्याप्यो यथा धूमश्चाग्न्यभिन्नो हि दृश्यते।
ब्रह्माधीनत्वतश्चापि ब्रह्माभिन्नं प्रचक्षते ॥४५९॥

ब्रह्मव्याप्यत्वेनापि वस्तुजातस्य ब्रह्मतादात्म्यमित्याह-अपिचेति। यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च

इति शास्त्रमनुसन्धेयम् योऽयं तवागतोदेव समीपे देवतागणःसत्त्वमेव जगत्स्रष्टा यतःसर्वगतो भवान् । सर्वं समाप्नोषि ततोऽसि सर्व इति घटकस्मृत्या व्याप्यस्य व्यापकाभिन्नत्वनिर्देशार्हत्वं प्रतिपादितम् ॥ उक्तार्थंदृष्टान्तेन-परबुद्धयारूढं करोति—अग्नीति । ब्रह्मायत्तस्थितिप्रवृत्तिकं तत्तदभेदव्यपदेशार्हमितिव्याप्तिमामनन्ति छान्दोगाः प्राणसम्वादे नवै वाचो न चक्षुंषिं नश्रोत्राणि न मनांसीत्याचक्षते, प्राणएवैतानि सर्वाणि भवन्तीत्याह – ब्रह्माधीनत्वतश्चापीति ४५८ ४५९ ॥

इन्द्रियाणां यथा प्राणाधीनत्वात्प्राणता श्रुता ।
एवं वै ब्रह्मणो विश्वं चेतनाचेतनात्मकम् ॥ ४६० ॥
भिन्नमेव स्वरूपेणाभिन्नमेतैश्च हेतुभिः ।
तस्मात्स्वाभाविकोभेदाभेद एवहि सिद्ध्यति ॥ ४६१ ॥
अथ वाक्याविरोधार्थो वर्ण्यते चोक्तवर्त्मना ।
वेदान्ते भेदवाक्यानि तथाऽभेदात्मकानि च ॥४६२॥
भेदनिषेधरूपाणि सन्ति तुल्यबलानि हि ।
तेषां परस्परं नैव बाध्यबाधकतोचिता ॥४६३ ॥

यद्यदधीनं तत्तदभिन्ननिर्देशार्हं यथा प्राणायत्त इन्द्रियगणस्तदभिन्ननिर्देशार्ह स्तद्वत् । चेतनाचेतनात्मकं विश्वं ब्रह्मणः सर्वात्मत्व-सर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्त्वसर्वाधारत्वादियोगेन भिन्नं ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रसत्त्वपराधेयत्वादियोगेनचाभिन्नत्व-मित्यर्थः । निगमयति-तस्मादिति । भोक्ता भोग्यं प्रेरितारञ्च मत्वा पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टं यदा पश्यत्यन्यमीशं सर्वं प्रोक्तं ब्रह्मह्येतत् । प्रधानक्षेत्रज्ञपति र्गुणेशः । संसारबन्धस्थितिमोक्षहेतुः नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ज्ञाज्ञौ द्वावजावीशा-

नीशौ अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ऋतं पिबन्तौ सुकृतस्य लोके गौरनाद्यन्तवती अजामेकां लोहितशुक्लकृष्णामिति" भेदव्यपदेशाच्च। अधिकन्तुभेदनिर्देशात्। शारीरश्चोभयथापि हिभेदेनैनमधीयते भेदव्यपदेशाच्चान्यः" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरमेवच। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षरउच्यते। उत्तमः पुरषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य विभर्त्यव्ययईश्वरः। यस्मात् क्षरमतीतोऽहमक्षरादपि-चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इतिश्रुतिन्याय-स्मृतयो भेदप्रतिपादिकाः। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् आत्मा वा इदमेक एवाग्रआसीत्। एको ह वै नारायण आसीत्। तत्त्व-मसि, सोऽहं ब्रह्मास्मि, आत्मैवेदं सर्व सर्वमिदं ब्रह्म त्वं वा अहमस्मि भगवो देवते अहं वै त्वमस्मिदेवते, सर्वं खल्विदं ब्रह्म तज्जलानि त्याद्या-श्रुतयः, सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। क्षेत्रज्ञञ्चापि मां विद्धि। एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत् सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। इत्याद्या-स्मृतयश्चाभेदप्रतिपादिकाश्च सन्ति। सर्वं खल्विदं ब्रह्म नेह नानास्ति कि-ञ्चन मृत्योः स मृत्युमाप्नोतिय इह नानेव पश्यति, सर्वं तं परादद्योऽन्य-त्रात्मनः सर्वं वेद, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्रत्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदित्याद्याभेदप्रतिषेधकाश्रुतयः, नचासां श्रुतीनां परस्परं वाध्यवाधकभावो वक्तुं शक्यः। तुल्यबलत्वात्। उपक्रमादिषड्लिङ्गोपेतत्वाच्चेत्याह-वेदान्त इति।॥ ४६० ॥ ४६१ ॥ ॥ ४६२ ॥ ॥ ४६३ ॥

तुल्यवलत्वतस्तस्माद विरोधोऽयमुच्यते।
स्वातन्त्र्यं पारतन्त्र्य श्च द्विविधं सत्वमस्तिहि ॥ ४६४॥

स्वस्यैवाधीनता या वै स्वतन्त्रसत्त्वमुच्यते ।
तस्याश्रयः परं ब्रह्म कृष्ण एवनिरूपितः ॥४६५॥

पारतन्त्र्यन्तु तत्प्रोक्तं पराधीनत्वमेव यत् ।
ब्रह्मेतरं हि यद्वस्तु चेतनाचेतनात्मकम् ॥४६६॥

भेदाभेदवाक्यानां तुल्यबलत्वाद्बाध्यबाधकभावो न सम्भवति । अतस्तदविरोधप्रकारस्त्वित्थं सत्ता तावद्द्विविधा–स्वतन्त्रपरतन्त्रभेदात तथाच स्वतन्त्रसत्वविषयकाभेदवाक्यप्रवृत्तिस्तस्यैक्यात तेनैव तेषां नैराकाङ्क्ष्यम् । तथैव भेदनिषेधपराणाञ्चापि चेतनाचेतनवस्तुस्वतन्त्रसत्त्वनिषेधपरत्वेन स्वार्थ एव प्रामाण्यात् भेदवाक्यानान्तु परतन्त्रसत्त्वविषयकत्वेनैव स्वार्थविधायकत्वात्सर्वं समञ्जसम । स्वतन्त्रसत्वं निर्वक्ति–स्वस्यवाधीनतेति । परमात्माश्रितत्वेसति स्वायत्तास्थितिप्रवृत्तिकत्वंस्वतन्त्रसत्तायालक्षणम् । तस्याश्रयमाह । तस्येति स्वतन्त्रसत्त्वस्येत्यर्थः । परतन्त्रसत्त्वञ्च परायत्तस्थितिप्रवृत्तिकत्वरूपमित्याह–पारतन्त्र्यमिति । यत् पराधीनत्वं तत् सत्त्वं पारतन्त्र्यं प्रोक्तमिति योजना ।

पारतन्त्र्यञ्च तद्वृत्ति शास्त्रेणै वेति निश्चितम् ।
पुनस्तद्द्विविधं प्रोक्तं कौटस्थ्यं च विकारि च ॥ ४६७
कौटस्थ्यं तत्र जन्माद्यविकारित्वे च नित्यता ।
जन्मादि परिणामित्वे नित्यत्वं तदद्वितीयकम् ॥ ४६८ ॥

कौटस्थ्यं चेतनेष्वस्ति विकार्यचेतने स्थितम् ।
एवञ्चाभेदवाक्यानि स्वातन्त्र्यविषयाणि हि ॥४६९ ॥

स्वतन्त्रमेकमेवाहुरित्यर्थो मुख्य एव च ।
पारतन्त्र्याश्रयाणाञ्च वहुत्वं श्रुतयो जगुः ॥ ४७० ॥

तत्परचराणि सर्वाणि भेदवाक्यानि सन्ति हि ।
चेतनाचेतनस्थस्य स्वातन्त्र्यस्य निषेधकम् ।। ४७१ ।।

शास्त्रेणेति । यदासीत्तदधीनमासीत्, जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः। मत्तः सर्वं प्रवर्त्तते सत्त्वंस्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे नचापरे। अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारतेति श्रुतिस्मृतिरूपशास्त्रेणेत्यर्थः। परतन्त्रसत्त्वं विभजते । पुनरिति । कूटस्थत्वं विकारशीलश्चेति परतन्त्रसत्त्वं द्विविधमित्यर्थ । तत्र = तयोर्मध्ये । नामजन्मादिविकारशून्यत्वे-सति नित्यत्वं कौटस्थस्य लक्षणं तदाश्रयो जीवः । अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः, न जायते म्रियते वा विपश्चित्. अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीर इत्यादिकं वाक्यमत्रानुसन्धेयम्। विक्रियायुक्तत्वेसत्यनाद्यन्तत्वं विकारशीलत्वं-सत्त्वस्य लक्षणमित्याह-जन्मादीति । तदाश्रयमाह-कौटस्थ्यंमिति। तदाश्रयं कार्यकारणात्मकं प्रधानप्रकृत्यादिशब्दवाच्यम् । गौरनाद्यन्तवती जनित्री भूतभाविनी सिता सिता च रक्ता च सर्वकामदुघा विभोः। त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् । अचेतना परार्था च नित्यासतत विक्रिया। तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाश-विकल्पवदिति श्रुतिस्मृतिवचनेनोक्तार्थस्यसिद्धिरित्यर्थः । उभयविधवाक्यानामविरोधप्रकारमाह-एवञ्चेति। स्वन्त्रसत्त्वप्रतिपादकतयाभेदवाक्यानां प्रवृतिरित्यर्थः। भेदवाक्यानां परतन्त्रसत्त्वविषयत्वेनैव स्वार्थे प्रामाण्यम् । परतन्त्रसत्ताश्रयप्रत्यगात्मानां नानात्वं श्रुतयः प्रतिपादयन्ति तानि वाक्यानि प्रागुदाहृतान्यनुसन्धेयानि भेदनिषेधकानां वाक्यानां चेतनाचेतनवस्तुवृतिस्वतन्त्रसत्त्वनिषेधपरत्वेनैव स्वार्थे प्रमाणमित्यर्थः। ४६७ । ४६८ । ४६९ । ४७० । ४७१ ॥

भेदनिषेधरूपं यद्वाक्यजातं तदुच्यताम् ।
अत्यन्ताभाव एव पारतन्त्र्यस्य ब्रह्मणि ।। ४७२ ।।

चेतानाचेतने चास्ति स्वातन्त्रस्य हि सर्वदा ।
अयञ्च पारतन्त्र्यस्यात्यन्ताभावो य ईश्वरे ॥ ४७३ ॥
ससार्वज्ञादिवद्धर्मविशेषो भावरूपकः ।
ब्रह्माधीनत्वमेवोक्तं विश्वस्य च स्फुटं श्रुतौ ॥४७४॥
यदासीत्तदधीनमासीदित्यादौ प्रकीर्तितम् ।

परब्रह्मणि पारतन्त्रस्यात्यन्ताभाव इति स्वातन्त्रस्यात्यन्ताभावः चेतनाचेतने ऽस्तीति च योजना। औपनिषदानां सिद्धान्ते अभावस्य-भावस्वरूपत्वमभ्युपेयत इत्याशयेनाह—अयञ्चेति। ईश्वरे पारतन्त्र्यं नास्तीति। प्रतीतिसिद्धाभावोयो वर्तते स सार्वज्ञ्यादिवद्धर्मविशेषोभाव-रूपक इति योजना। यन्निखिलस्य विश्वस्य ब्रह्मायत्तस्थितिप्रवृत्तिकत्वं श्रुत्युपदिष्टमतः तां श्रुतिमुदाहरति—यदासीदिति। ४७२।४७३।४७४॥

सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णेन चापरे ॥ ४७५ ॥
अस्वातन्त्रायात्तदन्येषामसत्वं विधि भासेत ।
ससुरासुरगन्धर्वासरक्षोरगराक्षसम् ॥ ४७६ ॥
जगद्वशे वर्ततेऽदः कृष्णाय सचराचरम् ।
इत्याद्याः स्मृतयः सन्ति पारतन्त्र्याभिधायिकाः ॥ ४७७॥
स्वतन्त्रसत्तयाचैवमभिन्नो विश्वतो हरिः ।
आत्मीयचिदचिद्रूपनियम्यवर्गवृति यत् ॥ ४७८ ॥
पारतन्त्र्यं तदत्यन्ताभावाश्रयत्वतो विभुः ।
भिन्न एव परं ब्रह्म सदाश्रीपुरुषोत्तमः ॥ ४७९ ॥
सर्वेषामपि वाक्यानां तात्पर्यमिदमेवहि ।
आचार्य्यैरेवनिर्णीतं वेदान्तार्थप्रकाशकैः ॥ ४८० ॥

सूत्रकारोपि वाक्यानि विरुद्धविषयाणि वै।
दृष्ट्वातान्यविरोधेनान्वेतुकामोऽनुकम्पया ॥ ४८१ ॥

स्वातन्त्रसत्ताश्रयो निरस्तसाम्यातिशयो विश्वात्मा परब्रह्म पुरुषोत्तम इति प्रमाणेन दृढ़यति—सत्त्वमिति । तच्च = स्वतन्त्रसत्त्वञ्च । अन्येषां चेतनाचेतनात्मकनियम्यवर्गाणां परतन्त्रसत्वाश्रयत्वमित्यर्थः । “यदासीत्तदधीनमासीत्” “जीवोऽल्पशक्तिरस्वतन्त्रोवर” मत्तः सर्वं प्रवर्त्तते इति पारतन्त्र्याभिधायकश्रुतिस्मृतिभ्यः । ससुरेति । अदः जगत् त्रिविधैः सुरादिभिर्भोक्तृभिः सहितं भोग्यरूपं कृष्णस्य सदानन्दस्य नियन्तुः वशे वर्त्तत इत्यर्थः ब्रह्मणश्चेतनाचेतनयोश्च सर्वात्मत्वसर्वं नियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्त्वसर्वाधारत्वयोगेन स्वरूपेणभेदः । ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वस्वतन्त्रसत्वपराधेयत्वयोगेन तस्य तयोरभेद इत्याह स्वतन्त्रेति । विश्वात्मा हरिः स्वाश्रितात्मसत्तया विश्वस्माद भिन्नः आत्मीयजडाजडनियम्यवर्गवृत्तिपरतन्त्रसत्ता तस्या अभावरूपेणात्मासाधारणेन धर्मेण विश्वस्माद्भिन्न इतिविश्वभिन्नाभिन्नश्रीपुरुषोत्तम इत्यर्थः स्वतन्त्रसत्ताविषयिकाऽभेदवाक्यप्रवृत्तिः, तस्यैक्यात् तयैव तेषां नैराकाङ्क्ष्यम् । तथैव भेदनिषेधपराणाञ्चापि चेतनाचेतनवस्तुवृत्तिस्वतन्त्रसत्त्वनिषेधपरत्वेन तेषां स्वार्थे एव प्रामाण्यात्, भेदवाक्यानान्तु परतन्त्रसत्त्वविषयकत्वेनैव स्वार्थविधायकत्वात्सर्वसमञ्जसमित्याशयेनाह = सर्वेषामिति । भेदाभेदप्रतिपादकवाक्यानां परस्परं बाध्य बाधकभावो वक्तुं नैव शक्यः तुल्यबलत्वात् । तस्मात्सर्वेषां वाक्यानां स्वार्थे प्रामाण्य सिद्धये स्वाभाविकभिन्नाऽभिन्नं ब्रह्मसूत्रकृद्भिर्निर्णीतम् । तेनाभिप्रायेण घटकसूत्राणि प्रणीतवान्, “अंशो नानाव्यपदेशादन्यथापि दाशकितवादित्वमभिधीयते” ब्रह्मसूत्र २ । ३ । ४२ उभयव्यपदेशात् त्वहिकुण्डलवत् ब्र० सू० ३ । २ । २७ प्रकाशाश्रयवद्वातेजस्त्वात् । ब्र० सू० ३ । २ । २७ तस्मात्स्वाभाविकभेदाभेद एवसूत्रकार सम्मत-इत्याहसूत्रकारइति ॥ ४८१ ॥

निर्ममे घटके सूत्रे उभे शारीरके प्रभुः। अंशो
नानेति विज्ञेयमहिदृष्टान्तकं तथा ॥ ४८२ ॥
अनयो र्दर्शितं तेन भिन्नाभिन्नस्वकं मतम्।
तस्माच्छारीरकं शास्त्रं भेदाभेदपरं मतम् ॥ ४८३ ॥

उक्तार्थं सूत्रकारसम्मत्या द्रढयति निर्ममइति उभइति। उभ-
यव्यपदेशात्त्वहिकुण्डलवत् "सू०त्र" ३।२।२७। अचिद्वस्तुनोब्रह्मणा
भेदाभेद एव सम्बन्धः कुतः उभयव्ययदेशात् "सर्वं खल्विदं ब्रह्म
तज्जलानिति" ब्रह्मैवेदं सर्वमात्मैवेदं सर्वमित्यभेदव्यपदेशात्" हन्ता
मिमास्तिस्त्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकर-
वाणि, यःपृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथवी न वेद यस्य पृथिवी
शरीरं यःपृथिवीमन्तरो यमयत्येष ते आत्मान्तर्याम्यमृत "इत्यादिना,
" भेदव्यपदेशाच्चे त्युभयविधशास्त्राविरोधात् स्वाभाविकभेदाभेद
एव सिध्यति। अन्यथा चैकतरस्य शास्त्रस्यावश्यं बाधप्रसङ्गात्। ननु
भेदाभेदयोरितरेतरविरोधात् कथमेकत्रावस्थानमित्याशङ्क्य तत्साध-
कदृष्टान्तमाह—अहिकुण्डलवदिति। यथाऽहिकुण्डलयोरहित्वेन कुण्ड
लत्वेन च भेदः,अह्यात्मकत्वादिना च कुण्डलस्याभेदः। तथाच कुण्ड
लावस्थापन्नस्याहेः कुण्डलस्य व्यक्तत्वात् प्रत्यक्षप्रमाणगोचरत्वेन भेदः
स्वाभाविकः। सर्पात्मकत्वतदाधेयत्वतद्व्याप्यत्वादिना तदपृथकसिद्धा-
दभेदोऽपि स्वाभाविकः लम्बायमानावस्थायान्तु सर्वदा सर्पायितत्वाव-
च्छिन्नस्वरूपस्य कुण्डलस्य सूक्ष्मरूपेण तत्र सत्वेपि, अव्यक्तनाम-
रूपतया प्रत्यक्षाग्राह्यत्वमित्युभयोरपि स्थूलसूक्ष्मावस्थयोरनुगतत्वाद्भि-
न्नाभिन्नत्वम् अन्यथा तस्य तत्राभावे पुनराविर्भावो न स्यात् तथा-
स्थूलावस्थापन्नस्य कार्यस्य कारणापृथक्सिद्धपरतन्त्रसत्त्वावच्छिन्नस्व-
रूपेण व्यक्तनामरूपत्वाद्भेदःश्रुत्यादिप्रमाणसिद्धः तदात्मकत्वादिना
चाभेदः। अव्याकृतावस्थायान्तु बीजेऽङ्कुरस्येव कार्यस्य कारणे

सूक्ष्मरूपेण सद्भावेऽप्यव्यक्तनामरूपत्वात्प्रत्यक्षाग्राह्यत्वमित्युभयावस्थायामपि तदात्मकत्वतदाधेयत्वतदायत्तस्थितिकत्वादिना तदपृथक्सिद्धत्वेनाभिन्नत्वेऽपि परतन्त्रसत्ताविच्छिन्नतदात्मीयस्वरूपेण नामरूपविभागेन च भिन्नत्वमपीति स्वाभाविकभिन्नाभिन्नमित्यर्थः। "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" ब्र० सू० ३।२।२७। परमात्मनोऽंशोऽयं जीवः। कुतः नानाव्यपदेशात्। "द्वा सुपर्णा सयुजा सखाया द्वावजावीशानीशौ" पृथगात्मानं प्रेरितारञ्च मत्वा, अनीशश्चात्मा बध्यते भोक्तृभावात् अनीशया शोचति मुह्यमानः। इत्यादि श्रुतिभ्यः। एवञ्च शक्तिमतः शक्तेरिवांशत्वेन भिन्नत्वेऽपि तदपृथक्सिद्धत्वादभिन्नत्वमितिवत् प्रकृतेऽपि जीवस्य ब्रह्मशक्तित्वाद्ब्रह्मांशत्वेन भिन्नत्वम्। तदपृथक्सिद्धत्वेन चाभिन्नत्वं मुख्यमेवेति राद्धान्तः उभयविधवाक्यानां तुल्यबलत्वात् अत्राधिकविचारस्तु वेदान्तकौस्तुभप्रभायां द्रष्टव्यः। अतः सूत्रकृता श्रीव्यासाचार्येण उदाहृताभ्यां सूत्राभ्यां स्वाभिमतो भेदाभेदसिद्धान्तः प्रदर्शित इत्याह अनयोरिति। उभयव्यपदेशादिति अंशोनानाव्यपदेशादिति च सूत्रयोरितितदर्थः ४८२। ४८३॥

**तत्त्वमस्यादिवाक्यार्थः पदार्थ पूर्वकं यथा।**
**आचार्य्योक्तिप्रकारेण सङ्क्षेपेणेह कथ्यते ॥ ४८४ ॥**
**तत्पदं तत्र सर्वज्ञं सर्वशक्तिं गुणाकरम्।**
**विश्वात्मानं परं ब्रह्म स्वतन्त्रं वक्ति श्रीहरिम् ॥४८५॥**

तत्त्वमसीतिश्रुत्यर्थः पदार्थोक्तिं निरूप्य प्रदर्श्यत इत्याह-तत्त्वमस्यादिवाक्यार्थ इति। तत्र तच्छब्दं व्याचष्टे तत्पदमिति। तत्र = तत्त्वमसीति श्रुतौ सर्वज्ञसर्वशक्तिविश्वात्मपरब्रह्मभूतस्वतन्त्रसत्ताश्रयप्रतिपादनपरस्तच्छब्दः। ४८५। ४८५॥

अल्पज्ञस्याणुमानस्य ब्रह्माधीनस्य सर्वदा ।
ब्रह्मात्मकस्यजीवस्य ह्यात्मवाच्यत्रत्वम्पदम् ।।४८६ ।।
द्वयोः पदार्थयोरेवसम्बन्धप्रतिपादकः ।
असिशब्दश्चविज्ञेयः पदार्थ एव मीरितः ४८७ ।।

तत्पदार्थं निरूप्य त्वं पदार्थमाह—अल्पज्ञस्येति । त्वं पदश्च तदात्मीयतदात्मकाल्पज्ञाणुपरतन्त्रसत्ताश्रयप्रतिपादनपरः ।। असिशब्दश्चोभयपदार्थसम्बन्धाभिधानपरः सच सम्बन्धस्तदात्मकस्य त्वंपद वाच्यस्य तत्पदार्थेनसह स्वातन्त्र्यसत्त्वाभेदसहिष्णुपरतन्त्र-सत्त्वभेदरूपः ॥ ४८६ । ४८७ ॥

तदात्मकस्य त्वंपदवाच्यस्य ब्रह्मणा सह ।
तत्पदार्थेन स्वातन्त्र्यसत्त्वाभेदसहिष्णुकः ।। ४८८ ।।
पारतन्त्र्यात्मसत्त्वाख्यो भेदसम्बन्ध उच्यते ।
तत्पदार्थः स्वतन्त्रोयः सर्वज्ञोऽनन्तशक्तिमान् ।।४८९।।
तदात्मकस्तदायत्तश्चेतनश्चाल्पशक्तिकः ।
जीवस्तदन्तरात्मा हि स एव परमेश्वरः ।।४९०।।
त्वम्पदार्थोऽसिचेत्येवं वाक्यार्थःसम्यगीरितः ।
तत्पदार्थोऽत्रविश्वात्मा भगवान् परिकीर्तितः ।।४९१।।
क्षेत्रज्ञस्यान्तरात्माच त्वंपदार्थ इतीरितः ।
ज्ञेयस्तयोरभेदो विशेषसामान्ययोरिव ।। ४९२ ।।
पृथिवीद्रव्यं घटो द्रव्यमितिदृष्टान्तके यथा ।
द्रव्यत्वरूपसामान्याद्घटत्वं पृथिवीत्वकम् ।। ४९३ ।।

विशेषाख्यं पृथङ्नास्ति सर्वसाधारणं त्विदम् ।
सार्वज्ञ्यादिगुणानन्तशक्तितो ब्रह्मणस्तथा ॥ ४६४ ॥

चेतनाचेतनाद्यन्तरात्मनोऽभेद उच्यते ।
पृथक्स्थित्याद्यभावत्वमभिन्नत्वं विवक्षितम् ॥४६५॥

सम्प्रति तत्त्वमसीतिश्रुतेर्वाक्यार्थमाह–तत्पदार्थइति । तत्पदार्थ-वृत्तिस्वतन्त्रसत्ताश्रयाभिन्नब्रह्मात्मकपरतन्त्रसत्ताश्रयाभिन्नस्त्वंपदार्थः । तत्पदार्थो विश्वात्मा, त्वम्पदार्थः क्षेत्रज्ञान्तरात्मा तयोरभेदो घटो द्रव्य पृथिवीद्रव्यमित्यत्र द्रव्यत्वावच्छिन्नस्य घटत्वावच्छिन्नपृथिवीत्वावच्छिन्नयोश्चसामानाधिकरण्यं मुख्यविशेषस्य सामान्याभिन्नत्वनियमात् तथैव सार्वज्ञ्याद्यनन्तगुणावच्छिन्नस्यापरिच्छिन्नशक्तिवैभवस्य ब्रह्मण स्वात्मकचेतनवस्त्ववच्छिन्नतदन्तरात्माभिन्नत्वमित्यर्थः । ४८८ । ४८६ । ४६० । ४६१ । ४६२ । ४६३ । ४६४ । ४६५ ।

इत्थमभिन्नमेवास्ति ब्रह्मणो वस्तु चाखिलम् ।
नत्वभेदःस्वरूपेण दृश्यते लोकशास्त्रयोः ॥४६६॥

एवं सर्वाणि वाक्यानि ह्यभेदविषयाणि वै ।
ज्ञातव्यानि ततःसर्वपदार्थानां परस्परम् ॥४६७॥

ब्रह्मापृथक्सिद्धत्वरूपमभिन्नत्वमाह—पृथगिति । घटोद्रव्यमित्यत्र घटस्य द्रव्यतादात्म्यं शक्यत्वान्मुख्यमेव घटत्वावच्छिन्नस्य द्रव्यत्वावच्छिन्नं विनापृथक्स्थितिप्रवृत्त्यनर्हत्वम् । एवं ब्रह्मविरहेण विश्वस्य पृथगवस्थानप्रवर्तनानर्हत्वेन विश्वं ब्रह्माभिन्नमित्यर्थः । ननु-स्वाभाविक भेदाभेदवादेऽपि गुणशाङ्कर्यं दुर्वारमित्यतआह–नत्वभेदइति। नहि स्वरूपतः जीवेशयोरैक्यं प्रतिपादयामो येनोक्तदोषः प्रसज्येत किन्तु-पदर्शितप्रकारेण ब्रह्मणश्चेतनाचेतनयोर्भिन्नाभिन्नत्वं ब्रूमः ऐतदात्म्यमिदं-

सर्वम् , अयमात्मा ब्रह्म आत्मैवेदं सर्वं खल्विदं ब्रह्म, त्वं वाऽहमस्मि-भगवो देवते अहं वैत्वमसि देवते तदात्मानमेवावेदोहं ब्रह्मास्मीत्यभेदपराणि वाक्यानि उक्तार्थ तादात्म्यबोधकानीत्याह –एवमिति ॥ ४६६ । ४६७ ॥

तत्सामान्यविशेषाभ्यां प्रकाराभ्यां निरूपणात्।
भिन्नाभिन्नत्वमेवास्ति तत्वज्ञैरिति निश्चितम् ।।४६८

अभेदः केवलो भ्रान्तिस्तथाभेदोऽपि केवलः।
श्रुतिस्मृतिविरुद्धत्वाद्वि वेकिनामसम्मतः ।।४६६।।

कैश्चित्तु शास्त्रतत्त्वं वै विशिष्टाद्वैतमुच्यते ।
चेतनाचेतने तैस्तु मते ब्रह्मविशेषणे ॥५००॥

द्वयोस्तत्र शरीरत्वं शरीरि ब्रह्म भण्यते ।
सुसूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मकारणम् ॥५०१॥

तत्स्थूलचिदचिद्वस्तुशरीरकार्यमुच्यते ।
तयोर्विशिष्टयोरैक्यं विशिष्टाद्वैतमुच्यते ॥५०२॥

इति या प्रक्रिया तेषां समीचीना न सा खलु ।
द्वयोर्विशेषणत्वस्य वैयर्थ्यादिति मन्महे ।।५०३।।

चिदचिद्विशिष्टं निखिलहेयप्रत्यनीकं सार्वज्ञ्यादिसमस्तकल्याण-गुणाकरं श्रीपुरुषोत्तमाख्यं परं ब्रह्म वेदान्तप्रतिपाद्यमितिभगवत्पादश्री-भाष्यकाराणां राद्धान्तः। चिज्जिवो भोक्ता अचिज्जडपदार्थजातं भो-ग्यम्। ईश्वरश्च तयोरन्तर्यामीभूत्वा नियामको भवति । एतत्त-त्त्वत्रयं मिथो भिन्नं मिथः सम्बद्धं च पारमार्थिकमित्यर्थः । चेत-नाचेतनवस्तुजातं परब्रह्मविशेषणभूतं तदुभयविशिष्टं सार्वज्ञ्याद्य-

चिन्त्यापरिमितगुणार्णवं जगदुदयविलयाद्यभिन्ननिमित्तोपादानक एं ब्रह्मेति, तत्र चेतनविशिष्टं चाचेतनविशिष्टं च विशिष्टे तयोरद्वैतं विशिष्टाद्वैतमित्याचक्षतइत्याह—कैश्चिच्चिति। चेतनो जीवात्मा हि ब्रह्मशरीररूपेण सदा ब्रह्मप्रकारभूतः ब्रह्मप्रकारत्वेनैव हि जीवस्य वस्तुत्वम्। अचेतनो जड़वर्गोऽपि ब्रह्मप्रकारभूत इत्याह। चेतनाचेतनयोः। तत्र = ब्रह्मणि। विशेषणविशेष्ययोरंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते एवं जीवपरयोर्विशेषणविशेष्ययोरंशांशित्वं स्वभावभेदश्चोपपद्यते, एवं तयोर्वैलक्षण्यस्वभावपरा भेदश्रुतयः। पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तमाश्रित्याभेदश्रुतयः प्रवर्त्तन्ते, इति तेषां राद्धान्तः। एतदुक्तिर्नरमणीया विशेषणाभावादित्याह—तेषामिति। विशिष्टाद्वैतवादिनामित्यर्थः। इति या प्रक्रिया तेषां समीचीना न सा खलु द्वयोर्विशेषणत्वस्य वैयर्थ्यादितिमन्महे। ५०३।

विशेषणं यतः सर्वैर्व्यावर्त्तकतया मतम्।
पदार्थमितरस्माद्याद्व्यावर्तयति वस्तुनः ॥५०४॥

तद्विशेषणमित्याहुर्विद्वांसः शास्त्रचिन्तकाः।
एवं व्यावर्त्यसद्भावे व्यावृत्तस्य तथैव च ॥५०५॥

विशेषणस्य सार्थक्यमन्यथा तदनर्थकम्।
रामशब्दो यथा शास्त्रे त्रयाणामपि वाचकः ॥५०६॥

तस्य चोच्चारणात्तेषां समानोपस्थितिर्भवेत्।
दाशरथीतिशब्देन तस्य विशेषणेन तु ॥५०७॥

भार्गवबलरामाभ्यां व्यावृत्तो गृह्यते परः।
यथा वा जनसङ्घेषु चैकस्य ज्ञापनाय वै ॥५०८॥

यदितरव्यावर्तकं तद्विशेषणमितिसर्वतन्त्रसिद्धान्त इत्याह। वि-शेषणमिति। व्यावर्तकत्वरूपं विशेषणमित्यत्रान्येषां विदुषां सम्मतिं दर्शयितुमाह-शास्त्रेति। व्यावर्तकस्य विशेषणस्य व्यावृत्त्ययोः सतोः साफल्यात्सामंजस्यमित्याह—एवमिति। तथैव = सद्भावे। व्यावर्त्य-सद्भावे व्यावृत्तसिद्धिस्तत्सिद्धौ विशेषणसिद्धिरित्यर्थः। विपक्षे बाधक-तर्कमुपन्यस्यति। अन्यथेति। व्यावर्त्याभावे व्यावृत्तासिद्धौ विशेषणा-सिद्धिरिति तदर्थः। तदनर्थकम् विशेषणानर्थकम्। उक्तार्थमुदाहरणेन दृढीकरोति। रामेति रामो दाशरथिरित्यादौ रामशब्दो हि भार्गव-बलरामरघुनाथेषु त्रिष्वपि शक्तस्तदुच्चारणेत्रयाणामुपस्थितिःसमाना तत्परत्वात्तस्य। यत्परः शब्दः स शब्दार्थः जैमि० सू० इतिन्यायात्) तत्र दाशरथिशब्दो द्वाभ्यां व्यावर्त्ताभ्यां व्यावृत्तं रघुनाथमुपस्थापयति एवञ्च भार्गवबलरामौ व्यावृत्तौ स्तः, दाशरथिशब्दस्य व्यावर्त्तकत्वाद्वि-शेषणत्वं तेन श्रीरघुनाथश्चव्यावृत्तः तथाच व्यावर्तकस्य विशेषणस्य-व्यावृत्त्योः सतोःसाफल्यात्सामंजस्यमित्यर्थः। त्रयाणाम्। भार्गव-बलरामरघुनाथानाम्। तस्य = रामस्य। तस्य = रामस्य परः = श्रीरघु-नाथः। उदाहरणान्तरेणाप्युक्तार्थंस्पष्टयति— यथेति।

तस्यावयववर्णाद्यलंकारादिविशेषणम्।
असाधारणमुक्त्वा ऽसौ देवदत्त इतीर्यते ॥५०६॥
एवं तांश्चात्र पृच्छामो विशिष्टाद्वैतवादिनः।
चेतनाचेतनाभ्यां वै प्रकाराभ्यां भवन्मते ॥५१०॥
व्यावर्त्तं ब्रह्म कस्मात्तद्व्यावृत्त्यं कथ्यतामिति।
यथा कर्मत्वकर्तृत्वे एकस्याऽसम्भवे तथा ॥५११॥
त एव नहि वक्तव्ये व्यावर्त्ये च विशेषणे।
चेतनाचेतनं ब्रह्मेत्येतत्तत्त्वत्रयात्मनः ॥५१२॥

तेषां मते चेतनाचेतनात्मकविशेषणयोः सतोरपि व्यावृत्तरूपे विशेषे ब्रह्मणि सत्वेपि व्यावृत्यस्यन्यस्याभावाद्विशेषणसङ्ग्रहस्य निष्फलत्वमेव, चेतनाचेतननियन्तृभ्यः पदार्थेभ्यस्तत्वत्रयेभ्यो भवतामपि तत्त्वान्तरानभ्युपगमात्, व्यावर्त्यसद्भावसापेक्षत्वनियमाद्विषणसाफल्यस्य, व्यावर्त्याभावे व्यावृतासिद्धौ विशेषणासिद्धेः कुतः विशिष्टत्वममित्याह—एवमिति ५१०। तद्व्यावृत्यंम्। चेतनाचेतनव्यावृत्यम्। यथैकस्य वस्तुनः कर्मत्वं कर्तृत्वञ्च नोपपद्यते तथा चेत नाचेतयोः व्यावर्त्यत्वं विशेषणत्वञ्च न सम्भवतीत्याह—यथेति। तएव = चेतनाचेतन एव चेतनाचेतनब्रह्मेति तत्त्वत्रयं तेभ्योऽन्य त्तत्त्वान्तरं- यदि स्यात्तदाव्यावर्त्यसत्वात्तयोर्विर्शेषणत्वमुपपद्येत नत्वेवं भवतां राद्धान्ते तत्त्रयातिरिक्ततत्त्वस्यानभ्युपगमादित्याह—चेतनाचेत्तनमिति। ५११। ५१२।

**वस्तुतोऽन्यन्न युष्माकमप्यङ्गीकृतमास्ति हि।**
**तस्माद्भवन्मते किञ्चिद्व्यावर्त्त्यं नहि सिद्धयति ॥५१३**
**व्यावर्त्यसिद्धयभावे च तद्व्यावर्त्तकता कुतः।**
**अव्यावर्त्तकतायाश्च न तद्विशेषणता तयोः ॥५१४॥**
**तदभावे विशिष्टत्वमसिद्धं स्वयमेव हि।**
**किञ्च विशेषणे ते वै ह्यनन्तगुणशक्तिभिः ॥५१५॥**
**विशिष्टस्यैव युष्माकं निर्गुणस्याथवा मते ॥**

यदि व्यावर्त्यं सिद्धयेत् तदा विशषणयोः व्यावर्त्तकता स्यात्तदभावे तदभाव इत्याह—तस्मादिति ५१३। तत्त्वत्रयेभ्यस्तत्त्वान्तराभावादिति तदर्थः। तदव्यावर्तकता = व्यावर्त्यव्यावर्ककता। तयोस्तद्विशेषणता कुत इति योजना। तद्विशेषेणता = परब्रह्मविशेषणता। तयोः = चेतनाचेतनयोः। तदभावे = विशेषणाभावे। सार्वज्ञ्या-

दिविशिष्टस्य ब्रह्मणश्चेतनाचेतनविशेषणेनाऽऽधारत्वमभिप्रेतम्, केवलस्य वा, इति विकल्पयति। किञ्चेति।

आद्ये विशिष्टवैशिष्ट्यं सिद्धान्तोऽङ्गीकृतो भवेत् ॥५१६॥
द्वितीये निर्गुणं तत्र भवतां नैव सम्मतः।
अङ्गीकारे प्रवेशः स्यान्मायावादिमते खलु ॥५१७॥
पुनस्तयोरभेदोहि विशेषणविशेष्ययोः।
अथवात्यन्तभेदोऽस्ति भवतामत्र सम्मतः ॥५१८॥
अभेदस्तु स्वरूपेण भवद्भिर्नोरिरीकृतः।
अन्यथा तत्स्वभावस्य साङ्कर्यं स्यादसंशयम् ॥५१९॥
परिणामादयश्चैव सुखदुःखादयस्तथा।
सव ब्रह्मणि एव स्युस्ततो निर्दोषता नहि ॥५२०॥
द्वितीयेत्यन्तभिन्नस्य वस्तुनो ब्रह्मकारणं।
नोपादानं भवेदेवं दोषाः स्युर्बहवस्तथा ॥५२१॥
सर्वधर्मच्युतिर्दोषःश्रुत्यक्तःप्रथमःपुनः।
कारणज्ञानतः सर्वकार्यज्ञानस्य या कृता ॥५२२॥
प्रतिज्ञा श्रुतिभिः सा वै नैव सिद्धचेत्तथोच्यते।
निमित्तज्ञानमात्रेण कार्यज्ञानं न जायते ॥५२३॥

सार्वज्ञ्यादिविशिष्टस्य ब्रह्मणश्चेतनाचेतनविशिष्टस्य चेतरेतरभिन्नत्वे विशिष्टद्वयसिद्ध्या विशिष्टाद्वैतसिद्धान्तभङ्गान्नाद्यः पक्षः साधीयानित्याह-आद्य इति ५१६। निर्विशेषवादो भवद्भिर्नाभ्युपेयते, तथासति परपक्षप्रवेशापत्तिरित्याशयेन द्वितीयपक्षमपि निरस्यति—द्वितीय इति ५१७। चेतनाचेतनयोर्विशेषणत्वाभावात्स्वाभाविकभेदाभेद एव तयोः

सम्बन्धः सिद्ध इत्याह--पुनइति । तयोः = चेतनाचेतनयोः भवता-मिति । तथाचोक्तं स्वयमेव विशेषणस्य विशिष्टवस्त्वैकदेशत्वेनाभेद-व्यवहारो मुख्यः विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेद-व्यवहारो मुख्यः इति भावः ५१८। यदि जीवेश्वरयोः स्वरूपेणाभेदाऽङ्गी-कृतः स्यात्तर्हि सुखदुःखादिनां साङ्कर्यं स्यान्नत्वेवमित्याशयेनाह-अभेद इति। विपक्षे वाधकतर्कमुपन्यस्यति--अन्यथेति । जीवपरयाः स्वरूपेणाभेदाङ्गीकार इति तदर्थः ५१९। जीवगतागुणा ज्ञातृत्वादयोऽ-चेतने भोग्यवर्गे ब्रह्मणि च प्राप्नुयुः, तदगुणाः सत्त्वादयो दोषा परिणामादयश्च ब्रह्मणि च प्राप्नुयुः, जीवे ब्रह्मधर्माः सार्वज्ञ्यनि-यन्तृत्वशास्त्रयोनित्वादयो स्युरित्याह--परणामादयश्चेति । यद्य-त्रभेद एव जीवेश्वरयोरभ्युपेयते तदा ब्रह्मणो विश्वं प्रत्युपादानकार-णत्वं न स्यादित्याह--द्वितीय इति। केवलभेदवादे दोषान् दर्शयति--सर्वेति ५२०। "जन्माद्यस्य यतः ब्र० सू० १। १। २॥ सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं-यन्तीत्यादिश्रुतयः परब्रह्मण्येव सृष्टिस्थितिपालनलयकर्तृत्वं प्रति-पादयन्ति तासां ब्रह्मणो निमित्तकारणत्वे वाधः स्यान्नहि निमि-त्तकारणे कार्यस्य लयः सम्भवतीत्यर्थः एकविज्ञानेन सर्वविज्ञान-रूपप्रतिज्ञायाः भङ्गःस्याद्यदि ब्रह्मण उपादानत्वं न स्यात ॥ ५२१। ५२२ ५२३।

अन्यथा कुलालादिज्ञानेन मृण्मयं समं।
कार्यंविज्ञायतामेवं नैव दृष्टं श्रुतं तथा ॥५२४॥
स्वयमात्मानमित्यादिश्रुतिवाधश्च निश्चितः।
सर्वदोषाधिराजाऽयं दोषः स्यान्नात्र संशयः।
अत्यन्तभेदवादी यद्वेदान्ताद्धि वहिः कृतः ॥५२५॥

इत्यादिदोषयोगेन पक्षोऽयं शास्त्राणां नहि।
सत्सम्प्रदायनिष्ठानां सूत्रकारानुवर्त्तिनाम् ॥५२६॥
तस्माद्वेदान्तवाक्यानां भेदाभेदरतात्मनाम् ॥ ५२७ ॥
स्वार्थप्रामाण्यसिद्धर्थं तुल्यप्राबल्यमिष्यते ।
भवद्भिरप्यभेदश्च भेदः स्वाविकोमतः ॥ ५२८ ॥
अपृथग्सिद्धएवोक्ते यतो ब्रह्मविशेषणे ।
भोक्तृभोग्यनियन्तॄणां भेदः स्वाभाविको मतः ॥५२६॥
अतस्तेषां स्वभावस्य साङ्कर्यमपि वारितम् ।
उक्तदोषप्रसङ्गेन केवलः सोऽपि नो मतः ॥ ५३०॥
ब्रह्मात्मकत्वतोऽभेदोभेदस्तेषां स्वरूपतः ।

नहि निमित्तकारणविज्ञानेन सर्वकार्यज्ञानसम्भव स्तथात्वे च कुलालादिज्ञानादपि मृन्मात्रस्य ज्ञानमापद्येत नतु तदस्ति सर्वानुभवविरोधादित्याह-कारणज्ञानत इति । विपक्षे बाधकतर्क-मुपन्यस्यति--अन्यथेति निमित्तकारणादपि यदि कार्यज्ञानं स्यादिति तदर्थः ५२४। "स्वयमकुरुतेति" श्रुतौ आत्मानमितिद्वितीयया कृतिविषयत्वं स्वयमितिकृतिमत्त्वम् । तत्राव्यक्तरूपेण कर्तृत्वं नामरूपत्वेन च कर्मत्वं कार्यकारणयोस्तादात्म्यात् एवञ्च ब्रह्मैव निमित्तमु-पादानञ्च सिद्ध्यति ब्रह्मणो विश्वं प्रति निमित्तकारणत्वे, उक्त-श्रुतेः व्याकोपश्चस्यादित्याशयेनाह—स्वयमिति ५२५ । केवलभेदवादश्च-वेदान्तशास्त्रविरुद्धत्वान्नादरणीय इत्याह—अत्यन्तेति । निगमयति—तस्मादिति । केवलभेदवादस्यात्यन्ताभेदवादस्य च वेदान्तशास्त्राविषय त्वादिति तदर्थः । वेदान्ते भेदप्रतिपादिका अभेदप्रतिपादिकाश्च श्रुतय-स्सन्ति ताभिश्चेतनाचेतनयोः ब्रह्मणा सह स्वाभाविकभेदाभेदसंसर्गः।-

प्रतिपाद्यते केवलभेदावलम्बनेऽभेदप्रतिपादकश्रुतीनां दुर्बलत्वं वाच्यम्। केवलाभेदवादिनां मते भेदप्रतिपादकश्रुतीनां बाधः प्रसज्येत। नचोभयेषां वचनानां प्रतिबध्यप्रतिबन्धकभावः कल्पयितुं शक्यते तुल्यबलत्वादित्याह-स्वार्थेति। भेदविषयकाणि वाक्यानि स्वार्थप्रामाण्यवन्ति तद्विषयस्य जीवेश्वरभेदस्य केनापि मानान्तरेणाप्राप्तत्वात् तद्विषयकवाक्यानां स्वार्थे प्रामाण्यम्। एवमभेदबोधकवचनानामपि स्वार्थे प्रामाण्य मित्यर्थः। चिदचिदीश्वराणां स्वरूपस्वभाववैलक्षण्यादसङ्कराच्च भेद इत्याशयेन वेदान्तदीपे भगवत्पादैर्यदुक्तं तदेतद्भवति अचिद्वस्तुनः स्वरूपतः स्वभावतश्चात्यन्तविलक्षणस्तदात्मभूतश्चेतनः प्रत्यगात्मा तस्माद्बद्धान्मुक्तान्नित्याच्च निखिलहेयप्रत्यनीकतया सर्वावस्थचिदचिद्व्यापकतया नियन्तृतया शेषितया चात्यन्तविलक्षणः परमात्मा तदुक्तं भगवता "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरमेवच उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः यो लोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः। यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोकेवेदे च प्रथितः पुरुषोत्तम" इति श्रुतिश्च "प्रधानक्षेत्रज्ञ पति गुणेशः" "विश्वस्यात्मेश्वरं पतिम्, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थित इत्यादिका" सूत्रकाराश्च एवं वदन्ति-"नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्च, अनुपपत्तेस्तु न शारीरः, कर्तृकर्मव्यपदेशाच्च, पत्यादिशब्देभ्यः, अधिकन्तु भेदनिर्देशात्" अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादित्यादिभिः सूत्रैः। तथाच श्रुतिस्मृतिसूत्रेषु सर्वत्रभेदनिर्देशे चिदचिदीश्वरभेदः स्वाभाविको विवक्षित इति निश्चीयते, इत्याशयेनाह—भवद्भिरिति। तत्र हेतुमाह--अपृथक्सिद्ध इति। यतः चेतनाचेतनेऽपृथक्सिद्धे ब्रह्मविशेषणे हीतियोजना अपृथक्सिद्धत्वं ब्रह्माविनाभूतम्। "प्राज्ञेनात्मनाऽन्वारूढः, उत्सर्जन्याति" तमेव विदित्वाऽतिमृत्युमेतीत्यादिभिर्भेदश्रवणाच्च, जीवपरयोर्भेदाभेदाववश्यमाश्रयणीयौ तत्र ब्रह्म वेद ब्रह्मैव भवतिइत्यादिभिर्मोक्षदशायां ब्रह्मस्वरूपापत्तिव्य-

पदेशात् यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदितिभेदेनेश्वरदर्शन-निषेधाच्च भेदस्स्वाभाविक इत्यवगम्यत इति समन्वयाधिकरणे भवतां भाष्ये प्रतिपादितम्। इति मनसिनिधायाह भोक्तेति। दोषास्पृष्टपरब्रह्म-णश्चेतनाचेतनाभ्यां स्वभावतो भेदस्तयोश्च परस्परं भेदः स्वाभाविक एवाभ्युपगम्यते भवद्भिरपि, अन्यथा, स्वाभावसाङ्कर्यप्रसङ्गात्। साङ्क-र्यञ्चभोक्तरि भोग्यत्वनियन्तृत्वयोः समावेशः। भोग्ये भोक्तृत्वनिय-न्तृत्वयोः नियन्तरि भोक्तृत्वभोग्यत्वयोः समावेश इत्याशयेनाह। अत इति।५२६।५२७।५२८।५२९।५३०॥

तस्मात् स्वाभाविकभेदाभेदः सिद्धः सुखेन वै ॥५३१॥
भवतां श्रीमुखेनै व स्वग्रन्थे च निरूपणात्।
एवं सति विशिष्टस्याप्यङ्गीकारो हि केवलम् ॥५३२॥
गौरवावह एवास्ति भवतामिति चिन्त्यताम्।
तथा च चिद् चिद्भिन्नाभिन्नविशिष्टमुच्यताम् ॥५३३॥
ब्रह्म भवद्भिरित्येव विशिष्टं नैव केवलम्।
इत्यादिदोषयुक्ते ऽपि भवतां केवलो ह्ययम् ॥५३४॥
विशिष्टब्रह्मवादे वा अर्थशून्ये दुराग्रहः।
अलमस्माभिरत्रास्य निरासेन विशेषतः ॥५३५॥
आचार्यैराकरे यस्मान्निरस्तत्वाद्विशेषतः।
तस्मात्स्वभावतो विश्वं भिन्नाभिन्नं परं मतः ॥५३६॥
मुमुक्षुभिः सदा ध्येयं वैष्णवैः सम्प्रदायकैः।

एवञ्च भेदस्य च स्वाभावि कत्वमङ्गीकृत्य पुनर्विशिष्टाङ्गीकारे-गौरवमात्रत्वाद्वरीयस्त्वं स्वाभाविक भेदाभेदपक्षस्यैव लाघवादित्याह--

तस्मादिति । निगमयति । तस्मादिति । ५३१।५३२।५३३।५३४।५३५।५३६ ॥

इतिपरमतनिराकरणपूर्वकस्वसिद्धान्तस्य निरूपणम् ।

श्रीदेव्या स्वानुरूपिण्या चैश्वर्याधाशया प्रभुः ।
स्वीयनित्यानपायिन्या जुष्टो वामाङ्गसंस्थया ॥५३७॥
श्रीराधया च गोप्यापि प्रेमाधृष्टातृरूपया ।
परमानन्दमूर्त्या हि कारुण्यादिगुणालया ॥५३८॥
भक्ताभीष्टार्थवर्षिण्या लावण्यादिमहोदधिः ।
भूदेव्या च तथा नित्यं सेवितः सत्यभामया ॥५३९॥
श्रीकृष्णः परमं ब्रह्म संसेव्यः श्रेय इच्छता ।
द्विभुजो वा चतुर्बाहुर्ध्यातव्यो वैष्णवैः सदा ॥५४०॥
तारतम्यं न वै कृष्णे द्विभुजे वा चतुर्भुजे ।
तुल्यस्यैवच तापिन्यां फलस्य श्रवणाद्यतः ॥५४१॥
तत्र नियामिको ध्यातृभावेनैव निरूपिता ।
ध्येयो वृन्दावने वापि मथुरायां यथारुचि ॥५४२॥
एवंविधः परं ब्रह्म श्रीकृष्णो जगदीश्वरः ।
उपास्यो नितरां भक्तैः श्रीगङ्गायाः प्रवाहवत् ॥५४३॥
श्रवणमननाध्यानैर्नामसङ्कीर्तनादिभिः ।
उपासनं मुकुन्दस्य कर्त्तव्यं भावसंयुतैः ॥५४४॥
अनादिकर्मरूपाया अविद्याया निवृत्तये ।
परमानन्दरूपायै श्रीकृष्णस्य पदाप्तये ॥५४५॥
दोषास्पृष्टः शुभगुणयुतः सर्ववेदैश्च वेद्यो ।

वन्द्योनित्यं विधिशिवसुराद्यैश्च विश्वस्य हेतुः ॥५४६॥
भिन्नाभिन्नो निखिलजगतो मुक्तप्राप्यो हरिस्तं ।
गोपीश्रीभूयुतमधिपतिं श्रीमुकुन्दं प्रपद्ये ॥५४७॥

इति वाक्यार्थ निरूपणम् ।

ऐश्वर्याधिष्ठात्र्या लक्ष्म्या वैशिष्ट्यं विधत्त--श्रीदेव्यति प्रेमाधिष्ठात्र्या गोपीप्रधानभूतायाः श्रीवृषभानुजाया नित्ययोगमाह-श्रीराधययेति । अनुरूपत्वं नाम भगवद्दिव्यविग्रहगुणाद्युपमेयत्रिग्रहगुणवत्त्वम् । द्विभुजश्चतुर्भुजश्च स्वप्रीत्यनुरूपेणोभयविधत्वात्तस्य नात्र तारतम्यभाव इत्याह-द्विभुज इति । ५३७।५३८।५३९।५४०।५४१।५४२।५४३।५४४।५४५ ५४६॥

अथेदानीं साधनानि विधीयन्ते, तानि च कर्मज्ञानभक्तिप्रपत्ति गुर्वज्ञानुवृत्ति योगभेदाद्विविधानि तत्र कर्म योगं विभजते ।

अथोच्यन्ते परः श्रेयः साधनान्युक्तवर्त्मना ।
कर्मज्ञानञ्च भक्तिश्चप्रपत्तिः श्रीहरेर्गुरौ ॥५४८॥
पञ्चैवैतानि बोध्यानि साधनानि मुमुक्षुभिः ।
नित्यनैमित्तिकं काम्यमिति कर्म त्रिधोच्यते ॥५४९॥
स्नानतर्पणसन्ध्योपासनहोमजपादिकम् ।
इतिनित्यमथों यज्ञो दानमध्ययनं तथा ॥५५०॥
एतानि च द्विजातीनां त्रीणि साधारणानि वै ।
याजनञ्च तथादानमध्यपनमिति त्रिकम् ॥५५१॥
असाधारणमेवेति ब्राह्मणानां प्रकीर्तितम् ।
षट्कर्मत्वमतः प्रोक्तं विप्राणामेव शास्त्रतः ॥५५२॥
क्षत्रियाणाञ्च वैश्यानां त्रिकर्मकत्वमुदीरितम् ।

इन्द्रियनिग्रहोऽहिंसातीर्थसेवा व्रतानि च ॥५५३॥

नित्येति। कर्मयोगस्य त्रैविध्यं दर्शयति—नित्येति। सन्ध्येति अहरहः संध्यामुपासीत, यावज्जीवमग्निहोत्रं जुहोतीत्यादिना नित्यकर्तव्यतयाविधीयमानानि नित्यानीत्यर्थः।

एतानि=यज्ञदानाध्ययनानि। साधारणानि=द्विजातिसाधारणानि। याजनाऽऽदानाध्यापनानि द्विजाग्र्यासाधारणानीत्याह—याजनमिति। तेषां त्रयाणान्तु निष्कामतयाऽनुष्ठाने नित्यत्वं सकामतय नुष्ठाने च वृत्तित्वमिति विभागः। अतएव षट्कर्मकत्रिकर्मकद्विजातिविभाग इत्याह—षट्कर्मकेति। अथेन्द्रियनिग्रहादीनि सर्वसाधारणानीत्याह—इन्द्रियेति। ५४८।५४६।५५०।५५१ ५५२।५५३ ॥

अन्नादिदानमस्तेयं सत्यं भूतहितेषणम्।
अकामक्रोधलोभत्वं धर्मोऽयं सार्ववर्णिकः॥५५४॥
कर्तृत्वाद्यभिमानं हित्वैतानि मुमुक्षुभिः।
अनुष्ठितानि वै तेषां मनः शुद्धिकराणि हि॥५५५॥

कर्तृत्वाद्यभिमानशून्यै मुमुक्षुभिरनुष्ठितानां तेषां मनशुद्धिपरम्परया ज्ञानभक्तिजनकत्वेन मोक्षसाधकत्वमित्याह—कर्तृत्वेति। तेषां सकामत्वेनानुष्ठीयमाने च काम्यकोटावन्तर्भाव इत्याह—काम्येति। तेषाम् कर्मणाम्।

जनकानि ततो ज्ञानभक्त्योरेवं भवन्ति हि।
साधनानि च मोक्षस्य शास्त्रकारैरितीरितम्॥५५६॥
काम्यसङ्कल्पतस्तेषामनुष्ठानं कृतं यदि।
काम्यकोटौ भवत्यन्तरिति तेषां च निर्णयः॥५५७॥

अथ केनापि कालेन निमित्तेन विशेषतः ।
विहितं कर्म यच्छास्त्रे तन्नैमित्तिकमुच्यते ॥५५८॥

अथ केनचित् कालादिविशेषनिमित्तेन विधीयमानं श्राद्धादिकं कर्म नैमित्तिककर्म स्वर्गकामो यजेतेत्यादिना सकाममधिकृत्य विधीयमानानि काम्यानि ।५५४।५५५।५५६।५५७।५५८ ॥

दर्शेन्द्वाद्युपरागादौ श्राद्धस्नानार्चनादिकम् ।
सकाममधिकृत्याथ शास्त्रेण विहितं च यत् ॥५५९॥
कर्म तत्काम्यमित्युक्तं पुत्रेष्टयादिजपादिकं ।
तत्र काम्यं सदा हेयं मुमुक्षुभिर्निषिद्धवत् ॥५६०॥
नित्यं नैमित्तिकं सर्वैरधिकारानुसारतः ।
कर्तव्यं श्रीहरेराज्ञापालनात्मकसेवनम् ॥ ॥५६१॥
तत्र त्रिवर्णिभिः कार्यं वेदोक्तमेव सर्वदा ।
शूद्रेण त्वेकवर्णेन कार्यं पौराणिकं सदा ॥५६२॥

इति कर्म योगः ।

नैमित्तिककर्म लक्षयति—अथेति, नैमितिकानुदाहरति । दर्शेति । काम्यकर्मणो लक्षणमाह—सकामेति । तत्र काम्यानां निषिद्धवत्संसारहेतुत्वाविशेषान्मुमुक्षुभिस्तानि हेयान्येवेत्याह--तत्रेति । तेषु मध्य इति । तदर्थः । नित्यनैमित्तिकानिच भगवदाज्ञापालनात्मकभजनरूपत्वादावश्यकतयाऽनुष्ठेयानीत्याह—नित्यमिति । तत्र त्रैवर्णिकैर्वैदिकानि कर्माण्यनुष्ठेयानि शुद्रेण तु पौराणिकानीत्याह—तत्रेति। ५५९।५६०।५६१।५६२

इतिकर्मयोगस्य विवरणम् ।

पूर्वोक्तकर्मयोगानुष्ठाननिर्मलमानसैः ।
शास्त्राधिकारयोग्यैश्च मुमुक्षुभिर्निरन्तरम् ।
सम्यगभ्यस्यमानाद्धिश्रवणादेर्विजायते ॥५६३॥
परब्रह्माभिधेयस्य श्रीपुरुषोत्तमस्य यः ।
स्वरूपगुणशक्त्यादिविषयोऽनुभवः स वै ॥५६४॥
ज्ञानयोगः समाख्यातस्तत्प्रसादत एव सः ।
तत्साक्षात्कारतः प्रोक्तो मोक्षहेतुर्विवेकिभिः ॥५६५॥

इति ज्ञान योगः ॥

नित्यनैमित्तिकानाञ्च भगवदाज्ञारूपाणां कर्मणामनुष्ठानादन्तः करणशुद्धिर्जायते ततश्शास्त्राधिकारयोग्यता तत्सम्पन्नमुमुक्षुभिरभ्यस्यमानाच्छ्रवणादेर्जायमानः यः परब्रह्माख्यश्रीपुरुषोत्तमस्वरुपगुणशक्तिवैभवादिविषयकानुभवविशेषः स ज्ञानयोगः समाख्यातः सच भगवदनुग्रहहेतुकसाक्षात्कारद्वारेण मोक्षस्य हेतुर्विवेकिभिः प्रोक्त इत्यर्थः

इति ज्ञानयोगनिरूपणम् ।

अथ भक्ति योग माह ।

भगवद्भजनं नित्यं वाङ्मनः कायकर्मभिः ।
निष्कामत्वेन वै प्रोक्ता भक्तिरित्येवसत्तमैः ॥५६६॥
मनोवृत्तिर्हरौगङ्गाप्रवाहवन्निरन्तरम् ।
तत्स्मरणात्मिका प्रोक्ता भक्तिर्विष्णुवशङ्करी ॥५६७॥
पुनः सा द्विविधा प्रोक्ता साधनाख्या फलात्मिका।
जन्मान्तरसहस्त्रेणानुष्ठितैः साधनैश्चया ॥ ५६८ ॥
जायमाना तु सा प्रोक्ता भक्तिः साधनरूपिका ।

तत्रापि वैदिका ह्येका पौराणिकाद्वितीयका ॥५६९॥
वैदिका मधुविद्याद्या यात्रैवर्णाधिकारिका।
पुराणोक्तप्रकारेण चेश्वरा राधनं तथा ॥ ५७० ॥
भक्तिः पौराणिका ज्ञेया सर्ववर्णाधिकारिका।
अथवा फलरूपायाः साधनं साधनात्मिका ॥५७१॥
याक्रिया क्रियतेऽकामै हरिमुद्दिश्य सात्वतैः।
भक्तिः सा कथिता शास्त्रे ययाभक्तिः पराभवेत् ॥५७२॥

निष्कामतयावाङ्मनः कायकर्मभिः सेवनं भक्तेर्लक्षणामित्याह-भगवद्भजनमिति। भक्तिरस्यभजनमिति, तदिहामुत्रोपाधिनैराश्ये-नैवामुष्मिन् मनः कल्पनमितिश्रुतिः व्याख्याता चेयं श्रीनारदपञ्चरात्रे। सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् हृषीकेण हृषीकेशसेवनं भक्ति-रुच्यते ॥ लिङ्गपुराणेऽपि भजइत्येष वैधातुः सेवायां परिकीर्तित। तस्मात्सेवाबुधैः प्रोक्ताभक्तिशब्देन भूयसी भजनं भक्तिरित्युक्तं वाङ्मनः। कायकर्मभिरिति। विष्णोर्वशकरित्वरूपां भक्तिमाह—मनोवृत्तिरिति वार्षिकगङ्गाप्रवाहवदनवच्छिन्नाप्राणधारणादहरहः प्रवर्द्धमानो--भगवत्संस्मरणसन्ततिरूपानुभूतिविशेषः ॥८३ ८४॥ सा चभक्तिर्द्विधा साधनरूपिका फलरूपाचेत्याह—पुनरिति। अनेकजन्मानुष्ठितपुण्य-पुञ्जोत्पन्नायाः साधनजयन्त्वात्साधनरूपिकेतितल्लक्षणमाह—— जन्मान्तरेति। जन्मान्तरसहस्रेषु तपोदानसमाधिभिः नराणां क्षीणपा-पानां कृष्णे भक्तिः प्रजायतइतिवचनमत्रानुसन्धेयम्। प्रकारान्तरेण तां-विभजते तत्रापीति। साधनभक्तिरपीत्यर्थः। आद्यामुदाहरति—वैदिकेति। तत्र त्रैवर्णिकानामेवाधिकारस्तथोक्तमपशूद्राधिकरणे श्रीनिबा-साचार्यचरणैः। द्वितीयामुदाहरति। पुराणोक्तेति। तत्रशूद्रोप्यधिक्रियते यथापाद्मे सर्वेद्यधिकारिणोह्यत्रहरिभक्तोयथानृपइति। पराभक्तेः

साधनभूता साधनरूपिकेत्यर्थान्तरमाह—अथवेति। अत्राथशब्दोऽर्थान्तरे वर्तते। उक्तार्थं पाञ्चरात्रप्रमाणेन दृढ़यति। या क्रियेति। यथा-साधनभक्त्या परा = फलरूपा = अत्रसामान्यक्रियाविधानात्सर्वेप्यधिक्रियन्ते तथाचोक्तं श्रीमुखेन स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। सिद्धिं विदन्ति मानवा इत्यादि अत्र स्व इति मानव इति सामान्यपद-प्रयोगादस्या अधिकारिणः सर्वसामान्यत्वं सूचितम्। ५६६-५६७-५६८-५६९-५७०-५७१-५७२॥

जन्मान्तरसहस्रेण तपोदानसमाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥५७३॥
कर्मयोगाद्यनुष्ठानरूपाज्ञा पालनञ्च यत्।
तद्व्याजेन प्रसन्नेन श्रीकृष्णेन निजेच्छया॥५७४॥
दीयमाना तु या भक्तिः क्षेत्रज्ञज्ञानपूर्विका।
फलरूपोच्यते सैव परा च प्रेमलक्षणा॥५७५॥
चक्षुरादीन्द्रियाणाञ्च रूपादिविषये यथा।
वृत्तिः स्वाभाविकी तद्वद्वर्द्धमानानयायिनी॥५७६॥
परब्रह्म स्वरूपाङ्गगुणादिविषयात्मिका।
मनोवृत्तिर्ध्रुवा या सा भक्तिरुच्यते परा॥५७७॥

कर्मयोगानुष्ठानरूपाज्ञापालनव्याजप्रसन्नेन भगवता दीयमाना त्वम्पदार्थविषयकात्मज्ञानोत्तरभाविनी भक्तिः फलारूपेत्याह—कर्मयोगेति। तद्व्याजेन = कर्मयोगानुष्ठानरूपाज्ञापालनरूपव्याजेन। क्षेत्रज्ञज्ञानपूर्विका = त्वम्पदार्थज्ञानपूर्विका। सा = फलरूपा। रूपादि विषयकेन्द्रियवृत्ति वदनवच्छिन्नस्वाभाविकभगवत्स्वरूपगुणादिविषयिका यावदात्मवृत्तिर्मनोवृत्तिर्भक्तिः फलरूपेत्यर्थः। या प्रीतिरविवेकानां

विषयेष्वनपायिनी त्वामनुस्मरतः सा मे हृदयन्नापसर्पतु इति सैव ध्रुवास्मृतिरुच्यते आहारशुद्धौ सत्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिरित्यादिकमत्रानुसन्धेयम् ॥ ५७३-५७४-५७५-५७६-५७७ ॥

तया तु भगवाञ्छीघ्रं साक्षात्कारं विधाय वै ।
स्वपदं परमानन्दं भक्तं प्रापयति स्वयम् ॥५७८॥
नेह भक्ताद्धरेर्लोके प्रियः कश्चन विद्यते ।
भक्तस्तत्पादसेवातः फलमन्यन्न याचते ॥५७९॥

तया = प्रेमलक्षणया भक्त्या । स्वसाक्षात्कारं विधाय परमानन्दात्मकं स्वपदं गोलोकं श्रीवृन्दावनं भगवान् श्रीकृष्णचन्द्रः स्वयम् भक्तं प्रापयति ॥ ५७८ ॥ उक्तलक्षणा भागवता भगवतः श्रीपुरुषोत्तमस्य सर्वतोऽप्याधिक्येन प्रिया इत्याह—नेहेति । दीयमानं न गृह्णन्ति विना मत्सेवनं जना इत्यादिकमनुसन्धेयम् ॥ ५७९ ॥

तद्भक्तैस्तद्गतप्राणैः पदं यत्प्राप्यते ध्रुवं ।
तदन्यैः प्राप्यते नैव कोटिभिश्चापि साधनैः ॥५८०॥
सत्सङ्ग एव तस्यास्तु भक्तेर्हेतुः प्रकीर्तितः ।
तस्मात् सत्सङ्ग एवादौ कर्तव्यो भक्तिकाङ्क्षिभिः ॥५८१
सन्तश्च मङ्गलागारभगवद्दर्शनेच्छया ।
प्रेमभक्तीतरान्सर्वान् पुरुषार्थांस्तृणीकराः ॥५८२॥
ईश्वराज्ञाविरुद्धन्तु नाचरन्ति कदाचन ।
तत्कैङ्कर्यैकमुख्यार्थप्राप्तिसन्तुष्टमानसः ॥ ५८३ ॥
ततोऽन्यपुरुषार्थेच्छाकालुष्यस्पर्शवर्जिताः ।
तेषां समागमः शास्ते सर्वश्रेयस्करः स्मृतः ॥५८४॥

श्रेयोर्थिभिः सदा सेव्यास्सन्तस्ते वै प्रयत्नतः।
भगवानपि तेषाञ्च सान्निध्यं न जहाति हि ॥५८६॥
अनुव्रजति तेषां वै वत्सं गौरिव वत्सला।
इत्युक्तो भक्तियोगोऽपि स्वाचार्य्योक्तः समासतः॥५८७॥

॥ इति भक्तियोगः ॥

भगवद्भक्तैर्यत्पदं प्राप्यते भक्त्यतिरिक्तानन्तसाधनैः तत्पदं कदापि न लभ्यत इत्याह—तद्भक्तैरिति। उक्तलक्षणा भक्तिः सत्संगमूला अतः फलभक्तीप्सुभिः सतां सङ्गः कर्तव्य इत्याह—सत्सङ्ग एवेति। तस्याः फलरूपायाः। सतां लक्षणमाह—सन्तश्चेति। पुरुषोत्तमदिदृक्षातृणी कृतसर्वपुरुषार्थकत्वेसति भगवदाज्ञाविरुद्धाचारशून्यत्वमित्यर्थः।

तन्नियोगकैङ्कर्य्यपुरुषार्थपरत्वेसति अन्यपुरुषार्थकालव्ययाभाववत्त्वं वा सल्लक्षणमित्याह—तत्कैङ्कर्य्येति। यथापद्मे कार्तिकमहात्म्ये वरं देव मोक्षं न मोक्षावधिं न चान्यं वृणेऽहं वरेशादपीह इदन्तेवपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः॥ कुवेरात्मजौः वद्धमूर्त्यैव यद्वत् त्वया मोचितौ भक्तिभाजौ कृतौच तथा प्रेमभक्तिं स्वकां मे प्रयच्छ न मोक्षे ग्रहोमेऽस्ति दामोदरेह। इत्यादिकमनुसन्धेयम् समासतः सङ्क्षेपतः॥५८०।५८१।५८२।५८३।५८४।५८५।५८६।५८७॥

॥ इति भक्ति योगनिरूपणम् ॥

शास्त्रोक्तेष्वपि कर्मादिसाधनेषु मुमुक्षुणा।
स्वस्यानुष्ठानसामार्थ्याभावं निश्चित्य माधवे ॥५८८॥
सदाचार्योपदिष्टमार्गेण करुणार्णवे।
भगवत्यात्मभारस्य विनिक्षेपः स एव हि ॥५८९॥
शरणापत्तियोगश्च प्रोक्तः श्रेयस्करः परः।
तत् श्रीकृष्णेन गीतायामतिगुह्यतमं स्वकम् ॥५९०॥

अर्जुनायोपदिष्टं वै प्रतिज्ञापूर्वकमतम् ।
सर्वपापक्षयश्चापि तेनैव प्रतिपादितः ॥ ५६१ ॥
अतः प्रपत्तियोगोऽपि निरपेक्षः प्रकीर्तितः ।
या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ॥ ५६२ ॥
तया विना तदाप्नोति नरो नरायणाश्रयः ।
इहि मानात्प्रपत्त्यैव सर्वार्थावाप्तिरीरिता ॥ ५६३ ॥
उपायत्वमुपेयत्वमीश्वरस्यैव यद्भवेत् ।
शरणापत्तिरित्युक्ता शास्त्रमानाद्विवेकिभिः ॥५६४॥

प्रपत्तियोगस्य स्वतन्त्रोपायत्वमाह— अत इति । प्रपत्तियोगो नाम शास्त्रोक्तज्ञानादिसर्वसाधनेषु स्वस्य सामर्थ्यमाकल्प्य सदाचारोपदिष्टमार्गेण रमाकान्ते भगवति श्रीवासुदेवे आत्मभारनिक्षेपणरूपः । प्रपत्तियोगादेव निखिलार्थस्यावाप्तिर्भवतीत्यत्र स्मृतिवचनं प्रमाणयति— या वै साधनेति । तया = साधनसम्पत्त्या । तत् = पुरुषार्थचतुष्टयम् । प्रपत्तेः स्वरूमाह— उपायत्वमिति । अहमस्म्यपराधानामालयोऽकिञ्चिनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यतामिति साच षड्विधा । आनुकूल्यस्य सङ्कल्पः प्रतिकूल्यस्य वर्जनम् । रक्षिष्यतीतिविश्वासो गोप्तृत्ववरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिरिति भगवच्छास्त्रवचनात् एतस्य व्याख्यानं वेदान्तरत्नमञ्जूषायां द्रष्टव्यम् । मुमुक्षुर्वैशरणं व्रजेत् सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज, सर्वस्य शरणं सुहृत् । तावदार्तिस्तथावाञ्छा तावन्मोहस्तथाऽसुखम् यावन्न याति शरणं त्वामेशेषाघनाशनम् । वृथैव भवतो जाता भूयसी जन्मसन्ततिः । तस्यामन्यतरं जन्म सञ्चिन्त्य शरणं व्रज अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् । तेषामहं समुद्धर्त्ता

मृत्यु संसारसागरात् । भवामि न चिरात् पार्थमय्यावेशितचेतसाम् । तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता इत्यादीनि वाक्यान्यनुसन्धेयानि । ५८८।५८९।५९०।५९१। ५९२।५९३ ।

आकिञ्चन्यं तथानन्यगतित्वमीश्वरे पुनः ।
स्वापराधोक्तिपूर्वं यच्चात्मसात्वस्य प्रार्थनम् ॥ ५९५ ॥
स्वरूपं शरणापत्तेरित्युक्तं सात्वते खलु ।
साधनादिष्वनुष्ठानसामर्थ्यविषयश्चयः ॥ ५९६ ॥
कर्तृत्वाद्यनहंकारआकिञ्चन्यं तदुच्यते ।
भगवद्व्यतिरिक्तान्यसाधनाख्या गतिर्नच ॥५९७॥
तथान्यफलसम्बन्धरूपागतिविहीनता ।
इत्यनन्यगतिस्तत्र प्रोक्ता शास्त्रार्थदर्शिभिः ॥ ५९८ ॥
सा प्रपत्तिश्च षोढोक्ता पञ्चरात्रविशारदैः ।
आनुकूल्यस्य संङ्कल्पः प्रतिकूलस्य वर्जनम् ॥५९९॥
रक्षिष्यतीतिविश्वासो गोप्तृत्ववरणं तथा ।
आत्मनिक्षेपकार्पण्ये षड् विधा शरणागतिः ॥ ६००॥
इतिमानात्प्रपत्तिस्सा विज्ञेया षड् विधा बुधैः ।
अङ्गानामपि षण्णां च लक्षणं पृथगुच्यते ॥ ६०१ ॥
सर्वात्मतां हरेर्ज्ञात्वा सर्वश्च भगवद्वपुः ।
प्राणिमात्रानुकूल्यस्याचारोङ्गः प्रथमोऽस्त्ययम् ।
पूर्वोक्ताद्विपरीता ये हिंसा मत्सरतादयः ॥ ॥ ६०२

तत्त्यागः प्रतिकूलस्य वर्जनश्च द्वितीयकः।

प्रपत्तेः स्वरूपमाह—आकिञ्चन्यमिति। अकिञ्चनत्वं नाम सर्व-साधनानुष्ठानसामर्थ्यादिविषयककर्तृत्वरूपाभिमानादिसर्वशून्यत्वम्। अनन्यगतित्वं नाम भगवद्व्यतिरिक्तान्यसाधनफलसम्बन्धलक्षणगति-शून्यत्वम्। तत्राग्रे स्वयं वक्ष्यते। अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः। त्वमेवोपायभूतो मे भवेदिति प्रार्थनागतिः। शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यतामितिप्रपत्तेः स्वरूपं निर्दिशति। स्वपराधेति। अकिञ्चनत्वं व्याचष्टे-साधनेति। अनन्यगतिशब्दार्थं विवृणोति। भग-वदिति। प्रपत्तिं विभजते प्रपत्तिश्चेति। प्रपत्तेरङ्गानि विभज्य दर्शयति-अङ्गानामिति। चराचराणि भूतानि सर्वाणि भगवद्वपुः। अतस्तदानु-कूल्यं मे कर्त्तव्य मितिनिश्चयः। श्रूयते हि सर्वात्मत्वं भगवतः अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, अहमात्मा गुडाकेश सर्वभूताशयस्थितः इति। द्वितीयमङ्गं व्याचष्टे। पूर्वोक्तेति।

वात्सल्यादिगुणाब्धिश्च सर्वस्याश्रयो हरिः।
सर्वरक्षासमर्थश्च प्रतिज्ञा परिपालकः॥ ६१५॥
प्रपन्नानस्मदादोत्र क्षिप्यते वेति निश्चयः।
विश्वासः कथितः सो वै प्रपत्त्यङ्गस्तृतीयकः॥६१६॥
सत्यप्रतिज्ञता तस्योद्घूष्यते भारतादिषु।
रामेणापि स्वयं प्रोक्तारण्ये च जानकीं प्रति॥६१७॥
सर्वरक्षासमर्थोऽपि सर्वज्ञोऽपि गुणाकरः।

प्रपत्तेस्तृतीयाङ्गं दर्शयति। वात्सल्येति। विश्वास इति। रक्षिष्य-त्यनुकूलान्न इति या सा दृढ़ा मतिः। सविश्वासो भवेच्छक्र सर्वदुष्कृत नाशनः योगक्षेमं वहाम्यहम्। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि

माशुच इति श्रीभगवद्वचनमनुसन्धेयम्। सत्यप्रतिज्ञेति। सत्यप्रतिज्ञत्वञ्च स्वस्य श्रीमुखेनोक्तम्, वनपर्वणि द्रौपदीं प्रति। पतेद्द्यौर्हिमवान् शीर्य्येत् पृथिवी शकलीभवेत्। शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेदिति वाल्मीकीयारण्यकाण्डे अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् न तु प्रतिज्ञा संश्रुत्य ब्राह्मणेभ्यो विशेषतः। तदवश्यं मया कार्यमृषीणां परिपालनम् अनुक्तेनापि वैदेहि प्रतिज्ञायाऽथकिंपुनरिति। ६१५। ६१६। ६१७॥

प्रार्थनारहितानात्मविमुखान् पुरुषोत्तमः।
अप्रार्थितो न गोपायेदिति तन्नियमोऽस्ति वै ॥६०३॥
अन्यथा सर्वमोक्षः स्याच्छास्त्रसेतोश्चभङ्गता।
इति निश्चित्य कर्त्तव्या वै सदा प्रार्थना हरौ ॥६०४॥
गोप्तृत्ववरणाख्योयं चतुर्थोंगः प्रकीर्तितः।
प्रपत्तव्यस्य कृष्णस्य प्रपत्तिर्ह्येव केवला ॥६०५॥
प्रसादहेतुरित्यस्मादात्मात्मीयस्य सर्वशः।
अर्पणं भगवत्येव कर्तव्यं विधिपूर्वकम् ॥ ६०६ ॥
आत्मनिक्षेप इत्युक्तः षट्स्वङ्गीति च पञ्चमः।
उपायानामसिध्याचापायानां प्राप्तितःस्वतः ॥६०७॥
कर्तृत्वविषये गर्वहानिः कार्पण्यमीरितम्।
आत्मनिक्षेप अङ्गित्वान्मुख्य एषु प्रकीर्तितः ॥६०८॥
तत्सहकारिणश्चान्ये विवेक एषु दर्शितः।
तस्मादकिञ्चनोऽनन्यगतिः सात्विक एव च ॥६०९॥

भगवत्प्राप्तिकामश्च मुमुक्षुः सार्ववर्णिकः ।
निर्विण्णोऽज्ञोथसर्वज्ञोऽधिकार्यत्र निरूपितः ॥६१०॥
प्रपत्तियोग इत्युक्तः सङ्क्षेपेणोक्तवर्त्मना ।

इति प्रपत्ति योगः ।

प्रपत्तेः पञ्चममङ्गमाह—प्रपत्तव्यस्येति । आत्मनिक्षेप इति । आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते। उपरिचराख्याने च, आत्मा राज्यं धनं मित्रं कलत्रं वाहनानि च । एतद्भगवते सर्वमिति तत् प्रोक्षितं सदेति । वाल्मीकीये भरतः । राज्यं चाहञ्च रामस्य धर्म्मं वक्तु-मिहार्हसीति । द्व्यक्षरन्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् । ममेति च भवेन्मृत्युर्नममेति च शाश्वतमिति भारतवचनमनुसन्धेयम् । तस्याः षष्ठ-मङ्गमाह-उपायानामिति । एतेषु षट्सु आत्मनिक्षेप एवाङ्गित्वान्मुख्यः । अन्ये च तत्सहकारिणस्तदङ्गभूता इत्याह—आत्मेति ।

इति प्रपत्तियोगस्य विवृतिः ।

सर्वज्ञः सर्वरक्षासमर्थो निखिलगुणार्णवोऽपि श्रीपुरुषोत्तमः । प्रार्थना शून्यैरात्मपराङ्मुखैरप्रार्थितो न गोपायति अन्यथा सर्वमोक्ष-प्रसङ्गात् । शास्त्रसेतुभङ्गापत्तेश्चेति निश्चित्य बुद्धेः सदैव प्रार्थनाप्रा-वण्यं गोप्तृत्ववरणरूपमनुष्ठेयमित्याह—सर्वरक्षासमर्थ इति । विपक्षे वाधकतर्कमुपन्यस्यति अन्यथेति । प्रार्थनांविना गोप्तृत्व इति तदर्थः ।

गुरूपसत्तिमाह—

गुरुप्रपतिरप्यत्र द्विविधा कथ्यतेऽधुना ।
साधनस्याङ्गभूतैका स्वतन्त्राचापरा मता ॥ ६११ ॥
अन्तरेण प्रपतिःश्रीगुरोः किञ्चिन्न सिद्ध्यति ।
एतदर्था प्रपत्तिर्यासाङ्गभूता प्रकीर्त्तिता ॥ ६१२ ॥

तत्र गुरुन्तु वेदाढ्यं ब्रह्मज्ञं वैष्णवं तथा ।
नित्यादिकर्मकर्त्तारं श्रीकृष्णाराधनेरतम् ।
मन्त्रज्ञं गुरुभक्तंच सदा मन्त्राश्रयं शुचिम् ॥६१३॥
जितेन्द्रियं विरक्तश्च पुराणज्ञं विमत्सरम् ।
मुमुक्षुः शरणं गच्छेदिति लक्षणसंयुतम् ॥६१४॥
अज्ञं प्राप्याथ गुरुं मूढो न वै मोक्षमवाप्नुयात् ॥
परीक्ष्य नश्वराँल्लोकान्निर्विण्णः शान्तमानसः ॥६१५॥
आस्तिको धर्मशीलश्च श्रद्धालुर्वैष्णवः शुचिः ॥६१६॥

गुरूपपत्तेर्द्वैविध्यं विभज्य दर्शयति-गुरूपपत्तिरिति । "न विना गुरु सम्बधं ज्ञानस्याधिगमः कृतः । गुरुः पारयिता तस्य ज्ञानं स्नवमिहोच्यत इति भारते शुकं प्रति जनकवचनमस्ति । तस्मात् सर्वस्यापि साधनजातस्य गुरूपसत्तिपूर्वकत्वाद् गुरूपसत्तिर्विधीयते "स गुरुमेवाभिगच्छेत् समित्प णिरि" ति । तत्र कीदृशः गुरोरभिगमनं विधीयते इति जिज्ञासायामाह— तत्रेति । प्रपत्तियोग इति तदर्थः । उक्तलक्षणसम्पन्नं गुरुम् समाश्रयेन्मुमुक्षुः, विपर्यये दोषस्मरणात् । भिन्ननावाश्रितः स्तब्धो यथा पारं न गच्छति एवं ज्ञानहीनं गुरुं प्राप्य कुतो मोक्षमवाप्नुयादित्यर्थः । शिष्यलक्षणमाह परीक्ष्येति । परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तस्मै स विद्वान् उपसन्नाय सम्यक्प्रशान्तचित्ताय शमन्वितायेत्यादिश्रुतयोऽत्रानुसन्धेयाः ।

गम्भीरश्चतुरो धीरः शिष्य एवं विधः स्मृतः ।
अथाङ्गानि प्रपत्तेश्च कालादि वहुविघ्नतः ।
अनुष्ठातु मशक्तं स्वमात्मानं परिचिन्त्य तत् ॥६१७॥

श्रेयः फलमुपायश्च मत्वा श्रीगुरुमेव वै ।
आत्मभारंतु सर्वात्मभावेन गुरुपादयोः ॥६१८॥
अर्प्य तदुक्त मात्रस्याचरणं मुग्धवालवत् ।
गुरुप्रपत्तियोगोऽयं स्वतन्त्रः परिकीर्त्तितः ॥६१९॥
उपासनं गुरोरेव वाङ्मनःकायकर्मभिः ।
कर्त्तव्यं तत्प्रपन्नेन हरिवुद्धयैव नित्यशः ॥६२०॥

तस्य गुरुप्रपत्यैव सर्वार्थावाप्तिरीरिता ।
उक्तानीमानि पंचापि सधनानि समासतः ॥६२१॥
अथच भगवद्गीतममानित्वदिविंशकम् ।
साधनानां च सर्वेषामुपायं परि कीर्त्तितम् ॥६२२॥
तदवश्यं गृहीतव्यं ज्ञानाख्यं हि मुमुक्षुणा ।
उपायानां सहायार्थं विरागोऽपि तथैवच ॥६२३॥
विरागश्च द्विधा प्रोक्तः सहेतुकोप्यहेतुकः ।
तत्रादौ कथ्यते चात्र विरागोऽपि सहेतुकः ॥६२४॥
स्वरागविषयीभूताः प्रेष्ठत्वेनैव ये मताः ।
पुत्रमित्रकलत्राद्यास्तद्वियोगेन हेतुना ॥६२५॥
दरिद्राद्यप्रियाणान्तु स्वतःप्राप्त्या च यः पुनः ।
जायमानो बिरागस्सो निर्दिष्टो हि सहेतुकः ॥६२६॥
व्यभिचारिस्वभावः सोऽबिवेकपूर्वकत्वतः ।
अपायी विषयप्राप्त्या कथितश्च विवेकिभिः ॥ ६२७ ॥

स एव यदि कृष्णस्य करुणासागरस्य वै ।
कृपाकटाक्षसंयुक्तः स्याच्चेच्छ्रेयो भवेत्तदा ॥ ६२८ ॥
ये वै भगवतः पूर्णकृपायाः पात्रतां गताः ।
अनन्याश्चिन्तयन्तो मां ये जनाःपर्य्युपासते ॥६२९॥
तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः ।
अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् ॥६३०॥
इत्यादिश्रीमुखोक्ता वै महल्लक्षणसंयुता ।
महाभागवता ज्ञानवैराग्यादिविभूषिताः ॥६३१॥
निमग्नमानसा भक्तिसमुद्रे च सुहृत्तमाः ।
तेषां सञ्जातसङ्गः स्यात्तत् कृपाविषयो भवेत् ॥६३२॥
शास्त्रीयेणैव मार्गेण भगवन्तं भजंस्तदा ।
तद्दार्ढ्यार्थं च भूयोपि यतते ह्यनुतिष्ठते ॥६३३॥

विरागं द्विधा विभज्य दर्शयति । विरागश्चेति । स्वीयरागविषयीभूतानां निरतिशयप्रेष्ठत्वेनाभिमतानां पुत्रकालत्रवित्तैश्वर्यादिपदार्थानां वियोगेन तद्विपरीतत्वेनाभिमतानां दरिद्राणां लाभेन च हेतुना जातः सहेतुकः, सचाविवेकपूर्वकत्वाद् व्यभिचारयुक्तोऽपायशङ्काग्रस्तइत्याह—तत्रेति । स यदि भगवतः कृपाकटाक्षसहकृतश्चेत्तर्हि महाभागवतानां जातसङ्गस्तत्कृपाविषयो भूत्वा शास्त्रीयमार्गे प्रवृत्तस्तेन मार्गेण भगवन्तं भजंस्तद्दार्ढ्यार्थं भूयो भूयो यतते ह्यनुतिष्ठते च तदानुकूल्यम्, अन्यथानैकान्तस्वभावत्वादसत्संगेन भ्रश्यतेमार्गादित्यर्थः ।

आनुकूल्यं भवेदेवमन्यथा भद्रमार्गतः ।
अनेकान्तस्वभावत्वादसत्संगेन भ्रश्यते ॥६३४॥

जन्मान्तरसहस्रेण पुण्यपुञ्जार्जितस्य तु ।
कोटिष्वपि मनुष्याणां पुंस एकस्य कस्य चित् ॥६३५॥
श्रीपुरुषोत्तमेनैव करुणार्द्रदृशा यदि ।
दृष्टस्य जन्मकालेऽतो वाल्याद्धि सात्विकस्य च ॥६३६॥
श्रुतिभिःस्मृतिभिः श्लाघ्यं मानुष्यं प्रापितस्य च ।
शैशवादेव विक्षेपासहिष्णुत्वाच्छमात्मनः ॥६३७॥
प्रवृत्तौ ग्लानिवुद्धेश्च श्रवणादिपरस्य वै ।
कथाश्रवणतः कर्मफलानां दुःखरूपताम् ॥६३८॥
श्रुत्वा प्रत्यक्षतश्चापि शरीरे स्वपरस्यहि ।
भूयोभूयश्चदुःखानि सम्प्राप्तान्यनुभूय वै ॥६३९॥
एवं कर्मवशीभूतानामिह प्रत्यगात्मनां ।
जन्म मृत्य्वादि रूपस्य चक्रस्य भ्रमणा त्मकम् ॥६४०॥
दुःखं समनुभूयातो जातकम्पात्मकस्य वै ।
मुमुक्षोर्जात एवं यो विरागः सोऽस्त्यहेतुकः ॥६४१॥
स च विवेकजन्यत्वान्मोक्षोपयिक उच्यते ।
व्यभिचारविहीनश्चविरागः सोऽभिधीयते ॥६४२॥
दुःखं तत्र द्विधा प्रोक्तमवस्थातापरूपकम् ।
अवस्थारूपमप्याद्यमवस्थाभेदतो वहु ॥६४३॥
गर्भजन्मजरामृत्युयमादियातनादिकम् ।
इत्येनेकविधं दुःखं जायते कर्महेतुकम् ॥६४४॥

तच्च विस्तरशः प्रोक्तं पुराणोपनिषत्स्वपि ।
पुण्यात्मनो गतिः स्वर्गो नरकः पापकर्मणः ॥६४५॥
श्वशूकरादिवृक्षान्तयोनिप्राप्तिस्तथैवच ।
एतदेव हि संसारचक्रभ्रमणमुच्यते ॥६४६॥
तापं चापि त्रिधा प्रोक्तमध्यात्मिकादिभेदतः ।
आध्यात्ममधिभूतञ्चतथाधिदेवसंज्ञकम् ॥६४७॥
आध्यात्मिकमपि द्वेधा शारीरं मानसं तथा ।
शारीरे ज्वरपीडादिशारीरमिति कथ्यते ॥६४८॥
कामक्रोधभयद्वेषलोभमोहविषादजम् ।
शोकासूयावमानादिजन्यं तन्मानसं स्मृतम् ॥६४९॥
शीतोष्णवातवर्षाम्बु विद्युदादि समुद्भवम् ।
आधिदैविकमित्युक्तं मृगपक्षिनृराक्षसैः ॥ ६५० ॥
सर्पादिभिः कृतं यत्तदाधिभौतिकमुच्यते ।
प्रकारभेदतो भूयो विरागो द्विविधः स्मृतः ॥६५१॥
जिहासोद्भव आद्यो हि सद्यो जातो द्वितीयकः ।
आद्यश्च सौभरेर्ज्ञेयः पुराणे गीयते स वै ॥ ६५२ ॥
ययातीनां च यो गीतः सद्यो जातः स उच्यते ।
इत्येवं कथितो द्वेधा विरागोऽत्र समासतः ॥ ६५३ ॥
उपायाः कथितास्सर्वे श्रीकृष्णानुग्रहं विना ।
अकिञ्चित्कारिणस्तस्मात्तमेव प्रार्थये सदा ॥६५४॥

इति साधन निर्णयः ।

द्वितीयं निर्हेतुकं वैराग्यं दर्शयति–जन्मान्तरेति। श्रुतिभिरिति। एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठितामन्नमदामेति ताभ्यो गामानयत्ता अब्रुवन्नवै नोयऽमलमिति। ताभ्योऽश्वमानयत्ता अब्रुवन्नवै नोयमलमिति। ताभ्यः पुरुषमन्वायत्ता अब्रुवन् सुकृतं वतेति। पुरुषो वाव सुकृतमिति। अत्र जन्मसहस्राणां सहस्रैरपि सत्तम। कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्। गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे। स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात्। कर्माण्यसङ्कल्पिततत्फलानि संन्यस्य विष्णौ परमात्मभूते। अवाप्यैतां कर्ममहीमनन्ते तमालयं ते त्वमलाः प्रयान्तीत्यादि श्रुतिभिः स्मृतिभि र्मानुष्यं श्लाघ्यतमं प्रतिपादितम्। निर्हेतुको विरागो विवेकजन्यत्वान्मौत्तौपयिकोऽव्यभिचारिस्वभाव इत्याह—सचेति। दुःखं विभज्य दर्शयति—दुःखमिति। अवस्थेति। अवस्थारूपं तापात्मकत्वेत्यर्थः। तापात्मकं दुःखं त्रैविध्यमिति विभज्य दर्शयति तापञ्चेति।

अधुना श्रीहरेः प्राप्तेर्निरूप्यन्ते विरोधिनः।
तेष्यत्र द्विविधा ज्ञेया विशेषसामान्यभेदतः ॥६५५॥
विशेषा एव तत्रादौ निरूप्यन्ते विरोधिनः।
तेचात्मनोरमेशस्य ज्ञानस्य प्रतिवन्धकाः ॥ ६५६ ॥
उपायानां फलस्यापि शास्त्रे प्रोक्ताश्चतुर्विधाः।
एतेषां चस्वरूपादेर्विपरीतत्वनिश्चयात् ॥ ६५७ ॥
अनात्मस्वेव देहादिस्वात्मवत्वस्य निश्चयः।
भगवन्तं गुरुंचर्तेऽन्यत्रात्मपरतन्त्रता ॥ ६५८ ॥
तदन्येषु च देवेषु नमस्कारार्चनादिकम्।
असच्छास्त्राभिलाषा च ह्यात्मे स्वातन्त्र्यभावना ॥६५९

ममाहङ्कारभावस्य दार्ढ्यंश्चे त्येवमादयः ।
स्वस्वरूपान्यथाज्ञानद्वारा श्रेयोविरोधिनः ॥ ६६० ॥
भगवत्यखिलाधीशे देवतान्तरसाम्यधीः ।
ब्रह्मरुद्रादिदेवेषु परत्वस्य च निश्चयः ॥ ६६१ ॥
परब्रह्मावतारेषु मनुष्यतिर्यगादिषु ।
तदर्चाविग्रहेषु श्रीशालग्रामादिकेषु च ॥ ६६२ ॥
अचैतन्यमनीशत्व लोहपाषाणतादिधीः ।
भगवन्नाममंत्रादौ शब्दसामान्यभावना ॥ ६६३ ॥
कथायां श्रीहरेश्चापि लौकिकाख्यान तुल्यता ।
अनन्ताचिन्त्यकल्याणस्वाभाविकगुणाकरे ॥ ६६४ ॥
परब्रह्मणि सर्वेशे गुणहीनत्वकल्पना ।
मायिक गुणवत्त्वादि कल्पनेत्यादिका अपि ॥ ६६५ ॥
ब्रह्मज्ञानविरोधित्वात्तत्प्राप्तिप्रतिबन्धकाः ।
स्वदोषाणां बहुत्वानुसन्धाने परमेश्वरे ॥६६६॥
भारपातभिया तस्य प्रपत्तिरुपसाधने ।
लघुत्वकल्पनं तस्माद्विश्वासाभाव ईश्वरे ॥ ६६७ ॥
साधनान्तरनिष्ठा च मन्त्रान्तरपरिग्रहः ।
भगवन्मन्त्रजापेज्यास्तवनादिकलक्षणात् ॥६६८॥
कैङ्कर्यादन्यकामेच्छाह्यन्तरायतया मताः ।
स्वधर्माचरणे स्वस्य फलोपायत्वभावना ॥६६९॥
गुरौ मर्त्यमतिर्विष्णुरूपे बहिर्नियन्तरि ।
गौरवस्य खिलत्वञ्चे त्युपायस्य तिरोधिनः ॥६७०॥

उपायनाशहेतुत्वात्तत्प्राप्तिप्रतिबन्धकाः ।
वर्जनीयाः प्रयत्नेन श्रेयस्कामैर्मुमुक्षुभिः ॥६७१॥
धर्मादौ पुरुषार्थत्वबुद्ध्या तत्प्राप्तिकामना ।
भगवत्परिचार्य्यायां स्वस्य स्वातन्त्र्यभावना ॥६७२॥
शास्त्रोक्त श्चे त् परित्यज्य यथेष्टाचारवर्त्तनम् ।
एते फलविरोधित्वाद्विष्णुप्राप्तेर्निरोधकाः ॥६७३॥
देहादौ बहुकालञ्च स्थातुमिच्छामृतेर्भयम् ।
हरेश्चहरिभक्तानां जात्यादेरभिमानतः ॥६७४॥
अवज्ञाद्यपराधस्याचरणं बुद्धिपूर्वकम् ।
असतां सङ्गतिश्चैते सद्यः साक्षाद्धरेर्विभोः ॥६७५॥
प्राप्तेर्विरोधिनो ज्ञेया निरयप्राप्तिहेतवः ।
विशेषरूपकाश्चामी वर्जनीया प्रयत्नतः ॥६७६॥
श्रुतिस्मृत्यादिमर्यादोल्लंघनं च कृतघ्नता ।
इन्द्रियप्रीतये व्यर्थं मानुषस्य विनाशनम् ॥६७७॥
बाह्याभ्यन्तरभेदेन द्विविधा वीर्यविक्रिया ।
परदाराभिसेवा च बाह्या वै विक्रिया स्मृता ॥६७८॥
विदुषामर्थकार्पण्याद्विद्यादिगुणविक्रिया ।
ऋषिभिः कथिता शास्त्रे साभ्यन्तर्वीर्य्यविक्रिया ॥६७९॥
विद्याबलेन विप्राणामपमानोजिगीषया ।
श्रीकृष्णाराधनात्प्राक्चपानाऽदनादिका क्रिया ॥६८०॥
संन्यासादिविधिं त्यक्त्वा वैराग्यरहितैर्जनैः ।
सङ्गेन मातृपुत्रादेस्त्यागो द्वेषादिहेतुना ॥ ६८१ ॥

सामान्याः कथिता एते वर्जनीयाः विरोधिनः ।
गीतायां षोडशेऽध्याये श्रीकृष्णेन प्रकीर्तिताः ॥६८२॥
आसुरी सम्पदप्येवं विरोधित्वेन वर्णिताः ।
वर्जनीया प्रयत्नेन श्रीकृष्णानुग्रहेप्सुना ॥ ६८३ ॥
उक्ता विरोधिनश्चैते यथाचार्यैः प्रदर्शिताः ।
प्रपत्तेरंगमित्युक्तं प्रतिकूलस्य वर्जनम् ॥ ६८४ ॥
प्रमाणान्यत्रयान्येवापेक्षितानि मुमुक्षुभिः ।
तानि सर्वाणि सन्त्येव मञ्जूषायां यथाक्रमम् ॥६८५॥
आचार्योक्तानि तत्रैव द्रष्टव्यानि विवेकिभिः ।
ग्रन्थवृद्धिभयान्नात्र लिखितानीति बुद्ध्यताम् ॥६८६॥

इति विरोधनिरूपणम् ।

सम्प्रति फलस्वरूपनिरूपणम् ।

फलन्तु भगवद्भावापत्तिलक्षणकोऽस्ति वै ।
मोक्षः स एव सायुज्यब्रह्मसाम्यादिनोच्यते ॥६८७॥
तस्य प्राप्तिक्रमश्चेह वर्ण्यते चोक्तवर्त्मना ।
जायमाने च पुंस्यादौ कटाक्षं श्रीपतेर्भवेत् ॥६८८॥
सात्विको बालतो भूत्वा मुमुक्षुश्च भवेत्ततः ।
मुमुक्षायाश्च जातायां साधने यतते ततः ॥६८९॥
कर्मज्ञानाद्युपायेनाराधितः पुरुषोत्तमः ।
प्रसीदति परज्ञानपरभक्त्योश्च कश्चन ॥६९०॥
व्याजीकृत्य स्वमात्मानं दर्शयति मुमुक्षवे ।
ततः श्रीभगवत्साक्षात्कारानुभवतो मुनिः ॥६९१॥

भगवद्भावापतिशब्दार्थः प्रागुपदर्शितप्रकारेणावसेयः। स एव = भगवद्भावापत्तिरेव। उक्तलक्षणमोक्षप्राप्तिक्रममाह—तस्येति। भगवद्भावापत्तिलक्षणमोक्षस्येतितदर्थः। प्रथमं जायमाने पुंसि भगवत्कृपाकटाक्षस्ततो जन्मनैव सात्विको भूत्वा मुमुक्षुः स्यात्। तथा च नारायणीये। जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्विकः स तु विज्ञेयः स वै-मोक्षार्थचिन्तकः। मुमुक्षायांञ्चसत्यां तत्साधने यतते ततः कर्मज्ञानादि साधनेनाप्याराधितः पुरुषोत्तमः प्रसीदति। परभक्तिपरज्ञानयोरेकतरं व्याजीकृत्यात्मानं दर्शयति तस्मै मुमुक्षवे ततः श्रीभगवत्साक्षात्कारानुभवेन तद्भावसम्पन्नो भवतीत्यर्थः। ६८७। ६८८। ६८९। ६९०। ६९१॥

भगवद्भावमापन्नो भवतीति विनिर्णयः।
एवञ्च भगवत्साक्षात्कारात् प्राकृतस्य तु ॥६९२॥
सम्बन्धात्मकवन्धस्य निवृत्तौ प्रत्यगात्मनः।
क्षेत्र क्षेत्रज्ञयोश्चेदङ्काराहङ्कारवाच्ययोः ।६९३॥
स्वत्वममत्वभावस्य नाशेन विमलात्मनः।
स्वभाविकतदीयत्वसम्बन्धस्यापरोक्षतः ॥६९४॥
भगवदनवच्छिन्नानुभूत्या स्थितिरेव हि।
भगवत्प्राप्तिरित्युक्ता वेदान्तार्थप्रकाशकैः ॥६९५॥
सर्वश्रुत्यविरोधेन श्री हरेरपि सम्मता।
इदं ज्ञानमुपाश्रित्य ममसाधर्म्यमागताः ॥६९६॥
इति कृष्णेन मुक्तानां साधर्म्यं परिकीर्तितम्।
साधर्म्यन्तु स्वरूपेण भिन्नस्यैवोपपद्यते ॥६९७॥

भगवत्प्राप्तिशब्दार्थं विवृणोति। एवञ्चेति। भग-

षत्साक्षात्कारात् प्रत्यगात्मनो जीवस्य सम्बन्धात्मकबन्धस्य प्राकृतस्य निवृत्तौ क्षेत्रं भूतेन्द्रियसङ्घातरूपं चेतनभोगायतनमिदङ्कारास्पदं क्षेत्रज्ञः तद्विषयकज्ञानाश्रयो ऽहङ्कारास्पदोजीवस्तयोः स्वत्वममत्व-भावस्य नाशेन अतएव विमलात्मनः स्वाभाविकस्य भगवदीयत्व-सम्बन्धस्य साक्षात्कारेण अनवरतभगवद्विषयकानुभूत्यास्थितिः भगवत् प्राप्तिरिति योजना। सर्वकर्मध्वंसभावपूर्वकसमस्तनिःशेषाविद्यानिवृत्त्यात्म रूपरिपूर्णयावदात्मभाविपरब्रह्मश्रीपुरुषोत्तमस्वरूपादित्रिविषयकानुभूतिसन्त तिर्भगवत्प्राप्तिरित्यर्थः। आह चैवं श्रीपराशरः'निरस्तातिशयाह्लादसुखभावै कलक्षणा। भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकीमतेति। परं ज्योतिरूपसम्प द्य स्वेनरूपेणाभिनिष्पद्यते, यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती त्यादि श्रुतिस्मृतयोऽत्रानुसन्धेयाः। उक्तार्थस्यस्वोत्प्रेक्षितत्वं निरस्यति— वेदान्तेति। वेदान्तार्थप्रकाशकैःपूर्वाचार्य्यैः सर्वश्रुत्यविरोधेन निर्णीता ६९२। ६९३। ६९४। ६९५।

उक्तार्थं श्रीमुखवचनेनापि द्रढयति। हरेरपीति। इदं वक्ष्यमाणं ज्ञानमुपाश्रित्यानुश्रित्य ममसाधर्म्यं मत्साम्यं प्राप्ताः। साम्यञ्चात्रस्वरूपेण गुणादिना च तथाच प्रत्यगात्मनां ज्ञानस्वरूपत्वात्स्वरूपसादृश्यमपरि छिन्नज्ञानधर्मकत्वाद्गुणसादृश्यञ्च तत्त्वं नाम तद्भिन्नत्वेऽसति तद्गत भूयोधर्मवत्त्वम्। नियन्तृत्वस्वातन्त्र्याभावेन ब्रह्मभिन्नत्वेसति सार्वज्ञ्या-द्यपहतपाप्मत्वादिभूयोब्रह्मगतधर्मवत्वाल्लक्षणासमन्वय इत्याह साधर्म्य-न्त्विति। सादृश्यमिति तदर्थः। तच्च भेदगर्भितम्। ६९६। ६९७।

सर्वज्ञत्वादिधर्माणां साधर्म्यं तत्र विद्यते।
ब्रह्मैवभवतीत्यादि ब्रह्मत्वं विदधाति यत्॥ ६९८॥

वाक्यन्तु न विरुद्धं तद्ब्रह्मत्वस्यापि सम्भवात् ।
ब्रह्मत्वं विभुधर्मेण मुक्तस्य प्रतिपद्यते ॥ ६९९ ॥
विभुत्वस्य स्वरूपेण कुत्राप्यश्रवणाच्छ्रुतौ ।
जगद्व्यापारवर्जं चैश्वर्यस्यापि समत्वतः ॥ ७०० ॥

धर्म सादृश्यमाह-सर्वज्ञत्वादीति। ब्रह्मैवभवतीति श्रुतेर्विरोधं परिहरति । ब्रह्मैवेति । ब्रह्मविद् ब्रह्मैवभवतीति वाक्यं यत् ब्रह्मत्वं विदधाति तद्वाक्यं निरंजनः परमं साम्यमुपैतीति श्रुतिविहितसाम्येन समं न विरुद्धम्-ब्रह्मत्वधर्मेण साम्यस्य सम्भवादित्यर्थः । मुक्तस्य ब्रह्मत्वं विभुधर्मेण-प्रतिपाद्य इति योजना मुक्तौ स्वरूपेण विभुत्वं नास्तीतिश्रुतिवाक्येषु तच्छ्र वणाभावात किन्तु धर्मतो विभुत्वमित्यर्थः । जगद्व्यापारवर्जमिति । जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्चेति सूत्रितं व्यासाचार्यैः ।

जगत्सृष्टयादिव्यापारेतन्मुक्तैश्वर्यम् । कुतः । यतो वाइमानि भूतानि जायन्ते" इत्यादौ परब्रह्मप्रकरणान्मुक्तस्य तत्रासन्निहितत्वाच्चेति सूत्रार्थः । ६९८ । ६९९ । ७०० ।

तस्मान्मुक्तावपि ज्ञेयं भिन्नाभिन्नत्वमेवहि ।
हर्यनुग्रहतो विद्वान् प्रद्योतेन सुषुम्नया ॥७०१॥
ब्रह्मरन्ध्राद्विनिष्क्रम्य प्रत्यूर्द्धं सूर्यरश्मिभि ।
अर्चिरादिपथा याति तत्तद्देवैः समर्चितः ॥७०२॥
आदित्यमण्डलं भित्वा तथा वायुश्च वैद्युतम् ।
प्रकृतेर्मण्डलात्पारं प्राप्नोति विरजां नदीम् ॥७०३॥

उपसंहरति—तस्मादिति । सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापक-त्वस्वतन्त्रसत्वसर्वाधारत्वादियोगेन ब्रह्मणश्चेतनाचेतनयोश्च स्वरू-

पेण स्वाभाविको भेदः ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रसत्वपराधेयत्वादियोगेन तस्य तयोश्च स्वाभाविकश्चाभेदः । तथाचोक्तप्रकारेण मुक्तिकालेऽपि ब्रह्मणश्चेतनाचेतनयोश्च भिन्नाभिन्नत्वमित्यर्थः । सम्प्रति विद्वदुत्क्रान्तिमाह—हर्यनुग्रहतः इति । मूर्धन्यनाड्योत्क्रम्य विदुषोऽपि च्छान्दोग्ये गतिः श्रूयते 'शतश्चैका हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विश्वगत्या उत्क्रमणे भवन्तीति । नाडीप्रवेशे विशेषः श्रयते 'तस्य हैतस्य हृदयाग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो मूर्ध्नो वा चाऽन्येभ्यो शरीरप्रदेशेभ्यः इति । श्रीपुरुषोत्तमेन स्वानन्यवशीभूतेन सर्वावस्थासु तदनुरूपबुद्धिदत्राऽनुगृहीतः, इयं सानाडी ययोत्क्रम्य ममसाधर्म्यंयास्यसीत्याशयेनाह—हर्यनुग्रहत इति । तदोकोग्रज्वलनतत्प्रकाशितद्वारइति ब्र०सू०।४।२।१६। तस्य व्याख्यानावसरे वेदान्तकौस्तुभभाष्ये एतत्सर्वं प्रतिपादितम् । तत्र द्रष्टव्यम् । विद्वान्मूर्द्धन्यया नाड्या निष्क्रम्य सूर्यरश्मीनुसार्य्यैवोर्ध्वं गच्छति तैरेव रश्मिभिरित्यवधारणात् विदुष ऊर्द्धगतौ सूर्य्यरश्म्यनुसारित्वनियतमेवेत्यर्थः ॥७०१॥ ७०२। ७०३ ॥

सूक्ष्मं तत्र शरीरं वै हित्वा प्रकृतिमण्डले ॥
अमानवकरस्पर्शाद्धि तीर्त्वा संकल्पतश्च ताम् ॥७०४॥
दिव्यविग्रहसन्पन्नो ब्राह्मालंकारभूषितः ।
द्वारपालैः समागम्य प्रणम्य तैश्च सत्कृतः ॥७०५॥
ततः प्रविश्य वैकुण्ठं गुणत्रयविवर्जितम् ।

विद्वान् स्थूलशरीरान्मूर्द्धन्यनाड्या निष्क्रम्य सूर्यरश्मीनारुह्य तदा परं पदं गन्तुमिच्छति तदाऽर्चियोऽभिमानिऽनातिवाहिकेन सुसत्कृत्य दिवाभिमानिनं तेन नीतस्तथैव तेन पक्षाभिमानिनं तेन षण्मासाभिमानिनं तेन सम्वत्सराभिमानिनं तेन वायुं तेन स्वस्मिन्

च्छिद्रं दत्वाऽऽदित्यं तथैव तेन चन्द्रमासं तेन विद्युदभिमानिनं देवता-विशेषं नीतस्ततश्चवैद्युतपुरुषप्रधानं वरुणाद्यातिवाहिकत्रयं प्राप्य प्राकृतमण्डलं भित्वा विरजां प्राप्नोति तदा परस्मिन्लिङ्गं हित्वा तां तीर्त्वा परब्रह्मलोकं प्रविश्य ब्रह्मसाधर्म्यं प्राप्नोति तस्मादर्चिरादय आतिबाहिका। इति सिद्धम् ॥७०४॥ ॥७०५॥

मुक्तप्राप्यं भगवतस्वरूपं निरूपयति--सहस्रादित्यमिति।

सहस्रादित्यसंकाशं तत्र च श्रीपतिं प्रभुम्।
सहस्रस्तम्भसंयुक्ते श्रीमहामणिमण्डपे ॥ ७०६ ॥
शेषासने विराजन्तं लक्ष्म्या हि परिसेवितम्।
साक्षात्कृत्वा प्रणम्यैति तत्कटाक्षेरितोऽन्तिकम् ॥७०७॥
तत्स्वरूपगुणादीनां साक्षात्काराश्रयस्तदा।
सार्वज्ञ्यादिगुणोपेतः सच्चिदानन्दरूपकः ॥७०८॥
तदनुग्रहतो भूत्वाऽप्राकृतैर्विहरत्यसो।
मोक्षस्वरूपमित्युक्तं तत्प्राप्तिश्च यथोदिता ॥ ७०९॥

शास्त्रे प्रेक्षावत्प्रवृत्तये अनुवन्धा अधिकारिविषयसम्बन्ध-प्रयोजनाख्याः सन्ति तान् दर्शयति—श्रेयस्काम इति।

श्रेयस्कामोधिकार्यत्र श्रद्धालुर्वैष्णवोमतः।
परं ब्रह्मास्य विषयः श्रीपुरुषोत्तमाभिधः ॥ ७१० ॥
भगवद्भावसंप्राप्तिः प्रयोजनश्च सम्मतम्।
वाच्यवाचकभावश्च सम्बधोऽपि प्रदर्शितः ॥ ७११ ॥

अस्य प्रवन्धस्य स्वोपेक्षितत्वं निरस्यन्नाह—

संग्रहीतानि पूर्वैः श्रीवेदान्तरत्नमञ्जूषायाः।
श्रीपुरुषोत्तमपादैः, वेदजवेदान्तरत्नानि ॥ ७१२ ॥

ततोऽन्यतोऽप्युद्धृत्य ग्रथितान्यत्रमयापि यथाबुद्धिः ।
ततो ग्रहीतुमसक्तास्तदर्थमिति संग्रहःसफलः ॥७१३॥
अत्र किञ्चिदयुक्तन्तु ग्रथितं स्यान्मयायदि ।
तच्छोधयन्तु विद्वाँसः सम्प्रदायानुयायिनः ॥७१४॥
यः कण्ठे धारयेदेतां वेदान्तरत्नमालिकाम् ।
सविचारं स सिद्धन्तविषये न विमुह्यति ॥७१५॥
प्रसीदन्तु सदाचार्याः प्रणतकरुणाकराः ।
यद्वाक्यामृतमास्वाद्याऽज्ञानरोगाद्विमुच्यते ॥ ७१६ ॥
यदनुग्रहतश्चायं सिद्धान्तोऽधिगतो मया ।
प्रणमामि गुरुं तं वै ज्ञानदीपप्रकाशकम् ॥ ७१७ ॥

वेदान्तज्ञेयं यदिमंजगतश्च हेतुं, तर्काद्यमेयमभिवन्द्य भजादिदेवै
र्ध्यातो ह्यनन्यशरणै र्निजभावदस्तं गोपीपतिं हरिमहं शरणं प्रपद्ये

इति श्रीसनन्दनादिनिवृत्तिपथप्रवर्तकब्रह्मविद्योपदेशकलोकाचार्य श्रीसनन्दनादिप्रवर्त्तित श्री १०८ महामुनीन्द्र भगवन्निम्बार्काचार्य्य चरणोपबृंहित वैदिक सत्सम्प्रदायानुगत निखिलशास्त्रपारावारीणस्वाभाविकद्वैताद्वैतसिद्धान्तसमर्थनकुशलातिविसृत्वरकीर्त्तिकिरणधवलीकृतदिङ्मण्डनकाश्मीरिश्रीकेशवभट्टचरणानुगेनविद्वद्वर्यश्रेष्ठानन्तरामेण विरचिता वेदान्तमाला समाप्ता ।७१०। ७११। ७१२७१३ ॥ ७१४ ।७१५ । ७१६ । ७१७ । ७१८ ॥

कृतामोलकरामेण तर्कादिविदुषा मया ।
वेदान्त रत्नमालाया ष्टीकेयं चन्द्रिकभिधा ॥ ७१९ ॥

भगवदवतार श्रीः१०८ सनन्दनादिप्रवर्तितसम्प्रदायानुगत श्री१०८ निखिलरसिकचक्रचूडामणिश्रीस्वामिहरिदासपदाश्रिताश्रित श्री१०८ स्वामिनिशरणपादपद्मचञ्चरीकेण कुरुक्षेत्रान्तर्गत गौड़वंशावतंसश्रीशालिग्रामोपाध्यायात्मजेन तर्कादिशास्त्रविदुषा तर्कतीर्थ तर्करत्नतर्कवागिशोपाधिविभूषितामोलकरामशास्त्रिणा निर्मिता वेदान्तरत्नमाला चन्द्रिका टीका समाप्ता।






॥ श्रीराधासर्वेश्वरो जयति ॥

❋ श्रीभगवन्निम्बार्क महामुनीन्द्राय नमः ❋

# सटीकवेदान्तरत्नमालायाऽशुद्धाशुद्धपत्रकमिदम् ।

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २० | द्दष्टव्यम् | द्रष्टव्यम् |
| ४ | १५ | गुर्वज्ञा | गुर्वाज्ञा |
| ,, | १६ | प्राप्तेवि | प्राप्तेर्वि |
| ६ | १७ | चक्षः | चक्षुः |
| ७ | १ | भ्योऽरि | भ्योतिरि |
| ,, | ११ | ऽह | हि |
| ,, | १८ | रथवा | ऽथवा |
| ,, | २० | रनन्त | ऽनन्त |
| ,, | ,, | ऽवामा | अवाह्य |
| ,, | ,, | कृत्स्नः | कृत्स्नो |
| ,, | ,, | एवं वै | एवं वा |
| ,, | ,, | ऽयआत्माह्यः | अयमात्माह्य |
| ,, | २५ | नत्वं | घनत्वं |
| ,, | ,, | घस्यात् | स्यात् |
|  | ,, | णोक्तम् | णोक्तम् |
| ,, | २६ | धनस्य | घनस्य |
| ८ | १६ | स्पृष्टा | स्प्रष्टा |
| ,, | १७ | स्पृष्टे | स्प्रष्टे |
| ,, | २५ | द्रष्ट | द्रष्टु |
| १० | २ | हय | ह्य |
| ,, | ११ | सुखा | सुखः |
| ११ | १३ | माण | माणं |
| ,, | २२ | विश्व | विश्वा |
| १२ | ३ | ऽनन्त | ऽनन्तो |
| ,, | १६ | साधन | साधना |
| १३ | २३ | रणस्या | रणस्य |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | ११ | भावः माया | माया |
| १७ | ११ | वत्त्व | वत्व |
| ,, | १८ | भवेत्सु वै | भवेद्वै स |
| १८ | २३ | पधे | पाधे |
| २१ | २५ | | |
| २८ | १६ | सृष्ठेः | सृष्टेः |
| ३४ | ७ | उक्तार्थं | उक्तार्थं |
| ३५ | १३ | तत् प्रसज्येत | तत्र प्रसङ्गः |
| ३६ | १४ | स्थोऽषि | स्थोऽपि |
| ३७ | ४ | मणिःद्यु | मणिद्यु |
| ,, | १३ | णुत्व | णुत्वं |
| ३८ | १६ | मण | मणु |
| ४३ | ७ | द्धार्हमि | द्धार्हत्वमि |
| ४४ | १ | भक्तया | भक्त्या |
| ,, | १८ | यथो | यथौ |
| ,, | २४ | वाधा | वाध |
| ४६ | १२ | वेषे | वैषे |
| ४९ | १ | णेचं | णेनच |
| ,, | ४ | विनश्यतिं | विनश्यति |
| ,, | २० | दभिः | दिभिः |
| ५३ | ७ | यदैवं | यदेवं |
| ५३ | ७ | यदैवं | तदेवं |
| ,, | १८ | मवेत | भवेत् |
| ,, | २३ | भ्यपगम | भ्युपगम |
| ५४ | ६ | दुषित | दूषित |
| ५५ | ५ | भवद्भ्रि | भवद्भि |
| ५६ | १ | तृथात्वे | तथात्वे |
| ,, | २ | गतभिति | गतमिति |
| ,, | ७ | व्रह्म | व्रह्म |
| ५९ | ७ | रक्यं | रैक्यं |
| ,, | ९ | निवृर्त्ति | निवृत्ति |

| पृष्ठ | पंक्ति | अशुद्धम | शुद्धम |
|---|---|---|---|
| ६१ | १२ | प्राकृक्तन | प्राक्तन |
| ६२ | २ | संसरान् | संसारान् |
| ६५ | ११ | श्रतौ | श्रुतौ |
| ६४ | १७ | प्रकृति | प्रकृतिं |
| ७१ | २१ | स्वर्श | स्पर्श |
| ७३ | १७ | स्मर्श | स्पर्श |
| ७५ | ३ | राम | रमा |
| ,, | ,, | दखु | दाखु |
| ,, | ४ | उच्यत | रुच्यत |
| ७७ | १ | असद्ध्रय | असद्वय |
| ,, | ८ | त्राण्ड | त्राण्डेषु |
| ,, | १२ | डान्त | डान्ता |
| ,, | २१ | नाति | नानि |
| ७८ | १ | तप्स्था | तत्स्था |
| ,, | ४ | मस्तान | मस्ताना |
| ,, | ६ | मध्पे | मध्ये |
| ,, | २२ | मिहितम् | भिहितम् |
| ७९ | १ | तन्मात्रा | तन्मात्र |
| ८० | १९ | रिष्टाद्यक्ती | रिष्टाद्व्यक्ती |
| ८१ | १ | द्यणु | द्व्यणु |
| ,, | २३ | तन्त्र | तन्त्रय |
| ८२ | १ | धिक | धिकं |
| ८३ | ६ | दप्यरि | दप्यपरि |
| ,, | १० | तज्ञार्जुन | तच्चार्जुन |
| ८४ | ७ | स्वभा | स्वाभा |
| ,, | १६ | शेषणाम | शेषणाम् |
| ९१ | ९ | श्रितं | स्तृतं |
| ,, | १६ | च्छन्नं | आच्छन्नं |
| ९४ | १३ | ब्र० भू० | ब्र० सू० |
| ,, | २३ | त्ववृं | त्वाद् वृं |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०३ | ४ | पच्या | पत्त्या |
| ११० | १६ | वैदान्ति | वेदान्ति |
| ,, | २० | श्रुयते | श्रूयते |
| १११ | ८ | विद्धिः | विद्धिः, |
| ,, | ८ | निर्धारेण | निर्धारणे, |
| ,, | १३ | शङ्कते | शङ्क्यते |
| ११३ | १२ | तत् | तद् |
| ११५ | ६ | प्रतितौ | प्रतीतौ |
| ,, | १२ | तत् | तज् |
| ,, | २४ | प्रत्यव | प्रत्ययञ्च |
| ११६ | १३ | काणं | कारणं |
| ,, | १४ | ससदृश्य | ससादृश्य |
| ११७ | १६ | रुपन्तु | स्वरूपन्तु |
| ,, | १७ | स्यारोपा | स्यारोपो |
| ,, | २१ | श्रुक्तित्वश्च | शुक्तित्वञ्च |
| ११८ | ४ | वञ्ज्ञा | वज्ज्ञा |
| ,, | १२ | तञ्ज्ञानं | तज्ज्ञानं |
| ,, | १६ | वाघक | वाधक |
| ११९ | १४ | असत्यः | असत्यं |
| ,, | २३ | भवत्येव | भवेन् |
| १२० | ५ | त्यो | स्यो |
| ,, | ६ | त्पते | त्पत्तो |
| ,, | ११ | चरा श्रुतावा | श्रुतावा |
| ,, | १५ | चैतन | चेतन |
| १२१ | ६ | स्याद्धि | म्यद्धि |
| ,, | २३ | सृप्य | सृप्य |
| १२२ | ११ | किश्च | किञ्च |
| ,, | १६ | पर्शि | पदर्शि |
| १२४ | ११ | वैदक | वैदिक |
| ,, | १५ | शक्तिःपि | शक्तिर्वि |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १८ | भिश्वा | भिश्चा |
| १२५ | २ | ज्ञान | ज्ञान |
| ,, | ४ | चिन्त्य | चिन्त्या |
| ,, | ६ | पदा | पद |
| ,, | २० | वाधः | वाधो |
| ,, | २१ | वाधस्या | वाधःस्या |
| १२६ | ५ | तदु | त्वदु |
| | ७ | शास्रा | शास्त्रा |
| ,, | १२ | लिखित्त | लिखित |
| ,, | २६ | ध्वंसे | ध्वंसेतु |
| १२८ | २४ | चावर | चह्यवर |
| १२९ | १५ | देष्ट्र | देष्ट्र |
| १२९ | २१ | रूररी | रुररी |
| १३० | १ | दिक्तं | रिक्तं |
| ,, | ४ | कित्त्व | किन्त्व |
| ,, | १० | ब्राह्मण | ब्रह्मण |
| ,, | ११ | कार्यं | कार्यं |
| ,, | ,, | च्छाक्त | च्छक्ति |
| ,, | १२ | तत्य | तत्प |
| ,, | १७ | मों | मो |
| ,, | ,, | पों | पो |
| १३१ | १ | द्रू | द्रू |
| ,, | ६ | पवर्या | पर्याय |
| ,, | ६ | स्टज | सृज |
| ,, | १० | ष्ट | पृ |
| ,, | ११ | गृह्नतै | गृह्णते |
| ,, | १३ | अत्यर्थ | अत्यर्थं |
| ,, | १७ | र्थाद | र्थाद् |
| १३२ | १ | स्वयंज्ञा | स्वयञ्ज्ञा |
| ,, | ३ | त्याद्य | याव |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| " | १२ | दुत्य | दुत्प |
| " | १३ | जगद्धा। | जगद्ध |
| १३२ | १५ | स्वस्व | स्वस्वा |
| " | १६ | स्वस्व | स्वस्वा |
| " | २४ | असद्‌य | असद्वय |
| १३३ | १३ | कर्स | कर्म |
| " | १५ | कर्मौ | कर्मो |
| " | १६ | तेषा | तेषां |
| " | " | रेद्रि | रेन्द्रि |
| १३४ | १० | क्यम | क्यम् |
| " | " | त्वाद्रू | त्वाद्रूं |
| " | १८ | श्रतिः | श्रुतिः |
| " | " | थारण | थोरण |
| १३५ | ११ | नानुन्म | नानुम |
| १३६ | ७ | प्रजामेय | प्रजायेय |
| १३८ | ११ | वर्त्तत | वर्त्तत |
| १३६ | १० | दात्म्य | दोत्म्य |
| " | २२ | किञ्चिज्त | किञ्चिज्ज |
| १४० | २ | त्स्रष्टा | त्सृष्टा |
| " | २२ | ज्ञयति | ज्ञपति |
| १४१ | १२ | त्वभस्मि | त्वमसि |
| १४२ | ११ | स्वस्य | स्वस्यै |
| १४३ | १ | तद्‌च | तद्‌गोच |
| " | ८ | स्थस्य | थ्यस्य |
| " | २२ | प्रमाण | प्रामाण्य |
| १४४ | ६ | तन्त्र | तन्त्य |
| " | " | तःत्र | तन्त्य |
| " | १३ | न्त्राया | त्र्यंत |
| " | " | विधिभासेत | विद्धिभारत! |
| " | १५ | य | स्य |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४२ | २० | शा | सा |
| ,, | २१ | र | रै |
| १५० | १८ | चिज्जि | चिज्जी |
| १५१ | १ | करणं | कारण |
| १५१ | ६ | ाण | णि |
| ,, | १५ | ने | न |
| ,, | १६ | श्चा | च्चा |
| १५३ | २ | स्य | स्या |
| ,, | ४ | ध्यु | भ्यु |
| ,, | ,, | द्विषण | द्विशेषण |
| ,, | ८ | | र्त्य |
| ,, | ११ | तन्त्र | तत्व |
| ,, | २० | श | शे |
| १५४ | ८ | रिरी | स्री |
| १५४ | ११ | सव | सर्वं |
| ,, | १४ | स्य | स्यु |
| १५५ | ४ | दा | दो |
| ,, | ८ | ह्मा | ह्म |
| ,, | १० | योनि | योर्नि |
| ,, | ,, | रणा | रिणा |
| १५६ | २ | मा | ना |
| ,, | ५ | स्वावि | स्वाभावि |
| १५७ | ८ | त्या | त्पा |
| ,, | २४ | र्मे | र्भे |
| १६१ | ६ | ग्या | भ्या |
| १७४ | ६ | घ्याथ | ध्य |
| ,, | ६ | त्वदि | त्वादि |
| १७३ | ० | मुपायं परि कीर्त्तितम् । | |
| | | | शु० मौपयिकं प्रकीर्त्तितम् । |
| १७५ | १४ | का | क |
| १८१ | ३ | ताः | ता |
| १८३ | ८ | शारः | शरः |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्धम् |
|---|---|---|---|
| १८४ | २२ | स्थ | स्थ |
| १८५ | ३ | दु | दुत्का |
| ,, | ४ | श्चे | श्चै |
| ,, | ५ | ड्य | डय |
| ,, | ,, | र्द्ध | द्धर्व |
| ,, | ७ | त्या | न्या |
| ,, | ,, | श्र | श्रृ |
| ,, | १२ | छार | द्वारे |
| ,, | १५ | र्द्ध | द्धर्व |
| १८६ | १ | च्छि | छि |
| ,, | ,, | मा | म |
| ,, | १३ | सो | सौ |
| ,, | १७ | वै | वैं |
| १८७ | २० | क | का |
| १८८ | ३ | नि | नी |
| ,, | ५ | गि | गी |

विशेषतयाऽवधारणीयमिदं यत्कृतेऽपिसंशोधने, दृष्टिमान्द्यादिदोष-वशात्क्वचित्क्वचित्काप्यशुद्धिरवशिष्टाऽसीदेवेति सम्भाव्यते, अतो विद्वज्जनैःपठनपपाठनरसरसिकैश्शोधयित्वा पठितव्यम्। क्वचिद् वकार-स्थले-वकारताऽपि संजाता तत्तुनाऽस्माभिरस्मिन् पत्रे संलिखितम् एवञ्च विरामाणामपि-वहुपुस्थलेपु व्यतिरेकोऽस्ति तस्माद्यथा स्थानं तद्विचार्यैवपठितव्यमिति ॥



॥ श्रीमन्निकुञ्जविहारिणे नमः ॥

वेदान्त-रत्नमालाया मुद्रापणे, यैः परमोदारमहानुभावैः
सहाय्यं-वित्तं प्रदत्तं, तैरत्यन्तमनुगृहीता-
वयमित्युपकृतिंमन्यमानास्तेषां
शुभनामान्यभिव्यञ्जयामः

१००) वेदान्तादि शास्त्र सं० पूज्यपाद गोस्वामी श्री १०८ श्रीदीक्षितजी महाराज, बम्बई ।

५०) पूज्यपाद वर्द्धमान पीठ श्री १०८ वे० शा० सं० महान्त श्रीमनोहरशरणदेवजी महाराज

१००) वेदान्तादि शास्त्र सं० महान्त श्री १०८ श्रीसङ्कर्षणदासजी महाराज रामबाग, वृन्दावन

५०) पूज्यपाद राजमान्य श्री १०८ ब्रह्मचारी श्रीराधेश्यामजी महाराज, बरसाना ।

# वेदान्त रत्नमाला

इस ग्रन्थ की छपाई का आय-व्यय विवरण इस प्रकार है -

आय—

३००) उपदर्शित-समिति महानुभावों से प्राप्त ।

३००)

व्यय—

१५०) कागज़ २५ रिम ।
१२५) छपाई २५ फार्म
१२) दफ्तरी २५ फार्म ।
१०) कागज टाइटिल ।
३) छपाई टाइटिल ।

३००)

सिर्फ टाइटिल पेज, अग्रवाल प्रेस, वृन्दावन में छपा ।